**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



*प्रथममुद्रणम्* - १९९८ - ५०००

*मुखपुटकला* - 'अरसु'

*मूल्यम्* - रू. २०/-

*मुद्रणम्* -
**वागर्थ प्रिण्टानिक्स्**
बसवनगुडि, बेङ्गलूरु - ४

**KAVIKOPAKALAPAH** - A collection of nine short plays of Samskrit written by Vishwasa. Publisher - SAMSKRITA BHARATI - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.

Pages: vi + 98 Price: Rs. 20/- First Print: December 1998

Printed at Vagartha Printonics, Basavanagudi, Bangalore - 4.

# प्राक्कथनम्

विगतेषु केषुचित् वर्षेषु तदा तदा मया लिखितानि कानिचित् नाटकानि अत्र सङ्गृहीतानि सन्ति । प्रायः सर्वाणि अपि एतानि सकृत् वा अभिनीतानि एव । अतः एतेषां रङ्गाभिनययोग्यत्वं प्रयोगसिद्धमेव इति वक्तुं शक्यते ।

अत्रत्येषु नाटकेषु 'शिवभक्तः मार्कण्डेयः', 'ज्ञानी जनकः' - इत्येतद्द्वयं पुराणकथाम् अवलम्ब्य लिखितम् । विशेषतया एतद्-द्वयं पौराणिकवेषभूषादिकं नेपथ्यरचनां च अपेक्षते । 'कृपणखल्वाटचरितम्' कथासरित्सागरस्थायाः कस्याश्चित् विनोदकथायाः नाटकरूपम् । तस्मिन् नाटके तु द्वाभ्यां नटाभ्यां खल्वाटत्वधारणम् अनिवार्यमेव । ( सत्सु अपि केशेषु प्रसाधनकौशलेन खल्वाटत्वसम्पादनं न क्लेशकरम् अद्यत्वे ।)

'कविकोपकलापः', 'साक्षात्कारः', 'शठं प्रति शाठ्यम्' - इत्येतानि त्रीणि अपि नाटकानि आधुनिकं विषयम् अवलम्ब्य विरचितानि । अल्पेन परिश्रमेण, अल्पैः अपि साधनैः एतानि नाटकानि अभिनेतुं शक्यन्ते ।

अन्तिमानि त्रीणि, न जाने नाटकपदवाच्यानि, उत एकाङ्कपदवाच्यानि, उताहो रूपकपदवाच्यानि इति । (तथापि 'नाटकानि' इति सामान्यनिर्देशः कृतः अस्ति ।) तत्र 'रामतपोवनाभिगमनम्' रामायणस्य कञ्चित् प्रसङ्गम् आश्रित्य लिखितम् । 'कथाकुतूहली कृष्णः' तु लीलाशुकस्य कृष्णकर्णामृतस्य सुप्रसिद्धं कञ्चन श्लोकम् आधारीकृत्य लिखितम् । 'चारुचेष्टितम्' श्रीकृष्णस्य बाललीलाम् अधिकृत्य विरचितम् । एतानि तु प्रायः लिखितरूपेण अलिखितरूपेण वा सर्वत्र प्रसिद्धानि एव ।

सर्वेषु अपि नाटकेषु भाषायां यावच्छक्यं सरलता रक्षिता । सरसतां च रक्षितुं यत्नः कृतः अस्ति । तत्र सार्थकता प्राप्ता अस्ति उत न इति विषये एतेषां नाटकानाम् अभिनेतारः, तद्वीक्षकाः सहृदयाः चैव प्रमाणम् ।

विद्यालयेषु अन्यत्र वा बालैः प्रौढैः वा अभिनेतुं योग्यानि सन्ति एतानि नाटकानि । तन्निमित्तम् एतेषाम् उपयोगं कुर्वन्तु संस्कृतज्ञाः इत्येव निवेदनम् ।

नाटकेषु एतेषु परिष्कर्तुं योग्याः अंशाः यदि सन्ति तर्हि वाचकाः कृपया स्मारयन्तु, येन अग्रे परिष्कारः शक्येत ।

मुखपुटकलाकाराय अरसु-महोदयाय, मुद्रणालयकारेभ्यः अन्येभ्यः सहकारिबन्धुभ्यः च धन्यवादाः ।

बहुधान्य सं।। मार्गशीर्ष-अमावास्या — *लेखकः*

१८.१२.१९९८

# अन्तरङ्गम्


| | | |
|---|---|---|
| १. | शिवभक्तः मार्कण्डेयः | 7 |
| २. | ज्ञानी जनकः | 19 |
| ३. | कृपणखल्वाटचरितम् | 30 |
| ४. | कविकोपकलापः | 43 |
| ५. | साक्षात्कारः | 59 |
| ६. | शठं प्रति शाठ्यम् | 69 |
| ७. | रामतपोवनाभिगमनम् | 86 |
| ८. | कथाकुतूहली कृष्णः | 93 |
| ९. | चारुचेष्टितम् | 99 |

# शिवभक्तः मार्कण्डेयः

**पात्राणि –**

मृकण्डुः

मरुद्वती

मार्कण्डेयः

सप्तर्षयः

ब्रह्मा

यमः

मृत्युः

## - प्रथमं दृश्यम् -

*(वेदपाठः श्रूयते)*

ॐ शन्नो मित्रश्शं वरुणः । शन्नो भवत्वर्यमा । शन्न इन्द्रो बृहस्पतिः । शन्नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिश्शान्तिश्शान्तिः ।

*(मृकण्डुमहर्षेः आश्रमस्य पुरोभागः । मृकण्डुमहर्षिः ध्यानमग्नः अस्ति । मञ्चे यदा प्रकाशः भवति तदा मृकण्डुः ध्यानं समाप्य उत्तिष्ठति ।)*

मृकण्डुः - *(मार्गं पश्यन्)* किमिदम् अद्य मम सौभाग्यम् ! परमपावनाः सप्तर्षयः अत्र, अस्माकम् आश्रमं प्रत्येव आगच्छन्तः सन्ति । भवतु, तेषां स्वागतं करोमि । *(सप्तर्षयः प्रविशन्ति ।)* पूज्याः, इतः इतः आगच्छन्तु । एतानि दर्भासनानि अलङ्कुर्वन्तु ।

प्रथमः - मृकण्डुमहामुने, भवतः दर्शनेनैव वयं कृतार्थाः । अलं सत्कारेण ।

मृकण्डुः - पूज्याः, भवतां पादस्पर्शेन मम आश्रमभूमिः पवित्रिता । महात्मनां भवताम् अत्र आगमनेन अहम् आत्मानं कृतार्थं मन्ये । *(उच्चैः)* पुत्र, मार्कण्डेय !

*(मार्कण्डेयः प्रविशति ।)*

मुकण्डुः - पुत्र, पश्यतु, एते सन्ति तपोधनाः, सप्तर्षयः । लोकपूज्यान् एतान् अभिवाद्य अनुग्रहं सम्पादयतु ।

मार्कण्डेयः - पूज्याः, मार्कण्डेयोऽहम् अभिवादये । *(पादस्पर्शपूर्वकं नमस्करोति ।)*

षड् ऋषयः - वत्स, दीर्घायुष्मान् भव । दीर्घायुष्मान् भव ।

*(वसिष्ठः आशीर्वादं न करोति । मुखं परिवर्त्य तिष्ठति ।)*

मृकण्डुः - *(वसिष्ठं दर्शयन्)* एषः परमपूज्यः वसिष्ठमहर्षिः । एतं नमस्करोतु ।

मार्कण्डेयः - भगवन्, अभिवादये । *(नमस्कर्तुं यतते ।)*

वसिष्ठः - *(तत् निवारयन्)* तिष्ठ तिष्ठ वत्स... ! मां मा नमस्कुरु ।

मार्कण्डेयः - *(स्वगतम्)* किमिदं विचित्रम् ! एते पूज्याः मम नमस्कारं नाङ्गीकुर्वन्ति ?

द्वितीयः - *(स्वगतम् )* किमिदम् आश्चर्यम् ! *(प्रकाशः)* वसिष्ठमहर्षे ! किमिदं भवता आचरितम् ? आशीर्वादं प्रार्थयमानस्य बालस्य अभिवादनं निराकृतम् !

वसिष्ठः - पूज्याः, जानन्तः अपि भवन्तः एवं वदन्ति । यदि एषः बालः मां नमस्करोति तर्हि मया अपि 'दीर्घायुष्मान् भव' इति आशीर्वादः करणीयः भवति ।

तृतीयः - क्रियताम् । तेन का हानिः ?

वसिष्ठः - भवन्तः अविचिन्त्य 'दीर्घायुष्मान् भव' इति आशीर्वादं कृतवन्तः । परन्तु सः आशीर्वादः निष्फलः भविष्यति इति अहं सम्यक् जानामि ।

चतुर्थः - किम्, अस्माभिः कृतः आशीर्वादः तिष्फलः भविष्यति ? कथम् ?

वसिष्ठः - एतस्य आयुष्यम् इतःपरं संवत्सरपर्यन्तं केवलम् । एकस्मिन् संवत्सरे अतीते एषः बालः मृत्युलोकं गमिष्यति । अतः एव अहं तथा आशीर्वादं न कृतवान् ।

सर्वे - हा हन्त !

वसिष्ठः - किमर्थं संशयः ? ज्ञानदृष्ट्या परिशीलयन्तु भवन्तः एव ।

*(सर्वे नेत्रे निमील्य ज्ञानदृष्ट्या पश्यन्ति ।)*

पञ्चमः - सत्यं महर्षे ! भवता यद् उक्तं तत्तु सत्यमेव । संवत्सरानन्तरम् एतेन यमलोकः गन्तव्यः एव ।

षष्ठः - तर्हि अस्माभिः कृतस्य आशीर्वादस्य का गतिः ?

प्रथमः - सः निष्फलः एव भवेत् किम् ?

वसिष्ठः - सप्तर्षीणाम् आशीर्वचनं निष्फलं भवितुम् न अर्हति । परन्तु तत् कथं सफलं भवति इति तु चिन्तनीयम् । वयं यदि एतद्विषये पितरं ब्रह्माणं पृच्छेम तर्हि सः समीचीनं मार्गदर्शनं कुर्यात् ।

द्वितीयः - सत्यम्, तर्हि वयम् इदानीमेव सत्यलोकं गच्छामः ।

तृतीयः - मृकण्डुमहर्षे ! भवतः पुत्रम् अपि अस्माभिः सह नयामः ।

मृकण्डुः - तथैव अस्तु पूज्याः । *(मार्कण्डेयम् उद्दिश्य)* वत्स.., एतान् अनुसरतु ।

मार्कण्डेयः - तथैव अस्तु जनक ।

*(सप्तर्षयः अग्रे गच्छन्ति । मार्कण्डेयः तान् अनुसरति । मृकण्डुः तान् एव पश्यन् तिष्ठति ।)*

## - द्वितीयं दृश्यम् -

*(रङ्गस्य मध्यभागे उन्नते आसने उपविष्टः अस्ति ब्रह्मा । सृष्टिकार्यं कुर्वन् इव सः हस्ताभिनयं कुर्वन् अस्ति । नेत्रे निमीलिते स्तः । सप्तर्षयः प्रविशन्ति ।)*

चतुर्थः - अहो, चतुर्मुखब्रह्मा सृष्टिकार्ये मग्नः इव दृश्यते । भवतु । मार्कण्डेय, पितामहं ब्रह्माणं नमस्करोतु ।

मार्कण्डेयः - पितामह ! मार्कण्डेयोऽहम् अभिवादये ।

ब्रह्मा - *(नेत्रे निमील्य एव)* दीर्घायुष्मान् भव, दीर्घायुष्मान् भव ।

वसिष्ठः - *(ससन्तोषम्)* मार्कण्डेय, भवान् जीवितः । भवान् रक्षितः ।

चतुर्मुखब्रह्मणा एव यदा 'दीर्घायुष्मान् भव' इति आशीर्वचनम् उक्तम्, इतःपरं भवतः मृत्युभयं नास्ति । भवान् उज्जीवितः ।

ब्रह्मा - *(नेत्रे उन्मील्य पुरतः दृष्ट्वा, स्वगतम्)* किमिदं सप्तर्षयः अत्र समागताः ! कोऽपि विशेषः स्यात् । *(प्रकाशः)* महर्षयः, आगच्छन्तु ।

सर्वे - पितामह, अभिवादयामहे ।

ब्रह्मा - केन कारणेन ऋषिवराणाम् आगमनं सञ्जातम् ?

वसिष्ठः - भगवन्..., अस्माकं मनसि काचित् जिज्ञासा उत्पन्ना अस्ति ।

ब्रह्मा - का सा जिज्ञासा ? पृच्छन्तु ।

वसिष्ठः - सृष्टिकर्तुः ब्रह्मणः वचनम् असत्यं भविष्यति वा इति जिज्ञासा ।

ब्रह्मा - कथम्.. ? विवरणं कुर्वन्तु ।

वसिष्ठः - भगवन् ! इदानीं यः बालः भवन्तं नमस्कृतवान् मार्कण्डेयः, तस्य आयुः केवलं षोडश वर्षाणि इति भवता एव तस्य ललाटे लिखितम् । तं बालं भवान् 'दीर्घायुष्मान् भव' इति आशिषा अनुगृहीतवान् अस्ति । कथम् एतत् सम्भवति ? यदि सः षोडशे वर्षे मरणं प्राप्स्यति तर्हि भवतः 'दीर्घायुष्मान् भव' इति अनुग्रहवचनम् असत्यं भविष्यति । यदि मरणं न प्राप्स्यति, तर्हि अपि षोडश वर्षाणि केवलम् एतस्य आयुः इति तस्य ललाटे भवता एव यत् लिखितं तत् असत्यं भविष्यति । अतः भवतः वचनस्य सार्थक्यं कथं भविष्यति इत्येव अस्माकं जिज्ञासा ।

ब्रह्मा - सत्यं खलु... ! सृष्टिकार्ये मग्नेन मया कथम् एवम् अविचिन्त्य अनुग्रहः कृतः... ! महान् प्रमादस्तु सञ्जातः । कथम् एतस्य परिमार्जनं कर्तव्यम्.. ? *(क्षणं विचिन्त्य)* अस्ति कश्चन उपायः ! भगवान् शङ्करः स्वभक्तान् दीर्घायुष्मतः कर्तुं शक्नोति । यदि सः

प्रसन्नः भविष्यति तर्हि एषः बालः दीर्घायुः भविष्यति । शङ्करेण एव यदि आयुः दीयते तर्हि मम वचनमपि सत्यं भविष्यति, बालोऽपि दीर्घकालं जीविष्यति । अतः इदानीं शिवः एकः एव अस्माकं शरणम् । तमेव प्रार्थयामहे ।

सर्वे - हे भगवन् ! शम्भो ! शङ्कर ! महादेव ! भवान् एतं बालकं दीर्घायुष्मन्तं करोतु । भवतः भक्ताय एतस्मै बालकाय शतवर्षाणाम् आयुष्यं ददातु ।

*(सर्वे प्रार्थयन्ते । मार्कण्डेयः नमस्कारस्थितौ तिष्ठति ।)*

ब्रह्मा - वत्स, मार्कण्डेय ! भगवान् शङ्करः यदि अनुगृह्णाति तर्हि न कोऽपि क्लेशः । भवान् इदानीमेव मातापित्रोः अनुमतिं स्वीकृत्य गोदावरीतीरं गच्छतु । तत्र शङ्करस्य आराधनं करोतु । भक्त्या प्रीतः शङ्करः भवन्तं रक्षति ।

मार्कण्डेयः - तथैव अस्तु पितामह !

ब्रह्मा - महर्षीणां जिज्ञासा इदानीं परिहृता स्यात् खलु ?

वसिष्ठः - आं भगवन् । वयम् अनुगृहीताः स्मः । भवतु, वयं भूलोकं गच्छामः ।

*(सर्वेऽपि गच्छन्ति । ब्रह्मा आशीर्वादं करोति ।)*

## - तृतीयं दृश्यम् -

*(मृकण्डुमहर्षेः आश्रमस्य पुरोभागः । निश्चलम् उपविष्टः मृकण्डुः चिन्तामग्नः अस्ति । मरुद्वती प्रविशति ।)*

मरुद्वती - *(चिन्तामग्नं पतिं दृष्ट्वा)* आर्य ! किम् अतीव खिन्नः इव दृश्यते.. ?

मृकण्डुः - आं मरुद्वति ! पुत्रस्य मार्कण्डेयस्य विषयमेव चिन्तयन् अस्मि ।

मरुद्वती - किं तद्विषये तावत् गभीरं चिन्तनम् ?

मृकण्डुः - मरुद्वति ! जानती अपि किमर्थम् अजानती इव व्यवहरति ? सद्यःकाले एव अत्र सप्तर्षीणाम् आगमनसन्दर्भे प्रवृत्तं सर्वं विस्मृतवती किम् ?

मरुद्वती - कथं विस्मरेयम् आर्यपुत्र ! मम पुत्रः अल्पायुः, इतःपरं केवलं षण्णां मासानाम् अनन्तरं तस्य मरणं भविष्यति इति तैः उक्तं कथं वा विस्मर्तुं शक्नुयाम् !

मृकण्डुः - वयं विस्मर्तुं प्रयत्नं कुर्याम । परन्तु सः यमः कदापि न विस्मरति मरुद्वति... ।

मरुद्वती - किमिदं विधिविलसितम् आर्य ! एतादृशस्य गुणशालिनः पुत्रस्य आयुः केवलं षोडश वर्षाणि । एतत्तु अन्याय्यं खलु !

मृकण्डुः - परन्तु एतदेव अस्माभिः प्रार्थितं खलु मरुद्वति ! 'दीर्घायुष्मतः गुणरहितस्य पुत्रस्य अपेक्षया अल्पायुः वा गुणी पुत्रः भवतु' इति भगवान् शङ्करः अस्माभिः एव प्रार्थितः खलु ! अतः तस्य तावदेव आयुः । तन्मध्ये सार्धपञ्चदशवर्षाणि पञ्चदशक्षणाः इव व्यतीतानि । इतःपरं केवलं षण्मासात्मकः अवधिः अस्ति । तदनन्तरम् अस्मत्पुत्रः मृत्युलोकं गमिष्यति इति कल्पनया एव अत्यन्तं खेदम् अनुभवामि मरुद्वति !

मरुद्वती - *(साक्रोशम्)* नैव.... नैव ! मम पुत्रम् अहं न त्यजामि । मम पुत्रः कदापि मृतः त भविष्यति ।

मृकण्डुः - परन्तु एतत् अनिवार्यं मरुद्वति !

*(पृष्ठतः पादशब्दः श्रूयते)*

मृकण्डुः - *(श्रुत्वा)* मरुद्वति ! पुत्रः आगतः इव दृश्यते । दुःखं नियन्त्रयतु ।

*(द्वौ अपि नेत्रे मार्जयित्वा दुःखनियन्त्रणं नाटयतः ।)*

मार्कण्डेयः - *(प्रविश्य, स्वगतम्)* मम पितरौ दुःखितौ इव भासेते । समीपं गत्वा पश्यामि । *(समीपं गत्वा)* जनक, अभिवादये । अम्ब, अभिवादये ।

मरुद्वती - आगच्छतु पुत्र ! माम् आलिङ्गतु ।

*(मार्कण्डेयः मातरम् आलिङ्गति ।)*

मरुद्वती - *(मार्कण्डेयस्य शिरसि आघ्राय)* वत्स...वत्स.. !

मार्कण्डेयः - किमर्थम् एतावान् उद्वेगः अम्ब ! किमर्थं रोदिति भवती ?

मरुद्वती - कथं वदामि वत्स...!

मार्कण्डेयः - अम्ब, किमर्थं सङ्कोचः ? किमर्थम् एवं खिन्ना अस्ति ?

मरुद्वती - *(मौनम्)*

मार्कण्डेयः - जनक, भवान् वदतु ।

मृकण्डुः - कथं वदामि वत्स.. ! *(दुःखावेगं निगृह्य)* भगवान् शङ्करः भवते केवलं षोडशवर्षात्मकम् आयुष्यं दत्तवान् अस्ति । तत्रापि सार्धपञ्चदशवर्षाणि व्यतीतानि । इतःपरं षण्णां मासानाम् अनन्तरं भवान् अस्मान् परित्यज्य दूरं गमिष्यति वत्स, दूरं गमिष्यति । भवन्तं विना वयं जीवितुं न शक्नुमः पुत्र ... !

मार्कण्डेयः - जनक, किमर्थं तावती चिन्ता ? कस्मिन् अपि वा दिने सर्वैरपि अस्माभिः इदं शरीरं परित्यज्य गन्तव्यमेव खलु ! भवतु । *(स्मृत्वा)* जनक ! चतुर्मुखब्रह्मा शिवस्य आराधनं करोतु इति माम् उक्तवान् अस्ति । अहम् इदानीं तदर्थम् इतः गच्छामि ।

मृकण्डुः - सत्यं पुत्र ! सः ईश्वरः न तु साधारणः । अपि तु मृत्युञ्जयः । विरूपाक्षः । सः कालस्यापि कालः, महाकालः । यदि परशिवः सन्तुष्टः भवति तर्हि निश्चयेन सः भवन्तं रक्षति । भवन्तं रक्षितुं

सः एकः एव समर्थः । गच्छ वत्स ! परमेश्वरस्य आराधनं कृत्वा तस्य अनुग्रहात् चिरञ्जीवी भव ।

मार्कण्डेयः - तथैव भवतु जनक ! तर्हि अहं साधयामि । अम्ब ! मम आशीर्वादं करोतु । *(नमस्करोति)*

मरुद्वती - गच्छ वत्स ! चिरञ्जीवित्वं प्राप्य प्रत्यागच्छ । वयं भवतः प्रतीक्षां कुर्वन्तः एव भवामः ।

*(मार्कण्डेयः प्रतिष्ठते, दम्पती आशीर्वादं कुर्वन्तौ भवतः ।)*

## - चतुर्थं दृश्यम् -

*(गोदावरीनद्याः तीरम् । मार्कण्डेयः प्रविशति)*

मार्कण्डेयः - कियत् प्रशान्तम् अस्ति गोदावर्याः तीरम् ! सत्यम्, भगवन्तं शिवम् उद्दिश्य तपः आचरितुम् इदमेव प्रशान्तं स्थलम् । एतस्याः गोदावर्याः दक्षिणे तीरे शिवलिङ्गप्रतिष्ठापनं कृत्वा शङ्करस्य आराधनं करोमि ।

*(रङ्गस्य वामभागं गत्वा तत्र शिवलिङ्गनिर्माणम् अभिनयति ।)*

सिकताभिः शिवलिङ्गं कृतवान् अस्मि ।

*(पद्मासने उपविश्य नेत्रे निमील्य)*

भगवन् शङ्कर ! ॐ नमः शिवाय ।
ॐ नमः शिवाय ।
ॐ नमः शिवाय ।

*(आरम्भे उच्चैः वदति । अनन्तरं शनैः शनैः वदन् ध्यानमग्नः भवति । वेदिकायाः दक्षिणभागे यमः मृत्युः च प्रविशतः ।)*

यमः - भोः मृत्यो ! मार्कण्डेयस्य प्राणान् अपहर्तुम् उचितः कालः

सन्निहितः । अद्य तस्य आयुष्यं समाप्तं भविष्यति । तस्य प्राणाः आनेतव्याः । सज्जः भवतु ।

मृत्युः - यथाज्ञापयति महाराजः ।

यमः - गच्छामः तर्हि ।

*(गमनं नाटयतः । पदत्रयम् अग्रे आगच्छतः ।)*

मृत्युः - महाराज ! एतदेव गोदावरीतीरम् । तत्र दृश्यते मार्कण्डेयः । *(दर्शयति)*

यमः - *(दृष्ट्वा)* आम्, शिवलिङ्गस्य पूजां कुर्वन् अस्ति । तत्रैव गत्वा कालपाशेन तस्य बन्धनं कुर्मः । *(मार्कण्डेयम् उद्दिश्य)* भोः बाल... ! भवतः जीवितकालः समाप्तः । अन्त्यकालः सन्निहितः । भवतः आयुष्यम् इदानीं समाप्तम् । एतेन कालपाशेन भवतः बन्धनं करोमि, पश्यतु ।

मार्कण्डेयः - भगवन् ! एकक्षणं तिष्ठतु । अहं शिवपूजां कुर्वन् अस्मि । पूजां समाप्य आगमिष्यामि । यतः शिवपूजासमाप्तिं विना अहम् किमपि कार्यं न करोमि । क्षणं तिष्ठतु ।

यमधर्मः - दुष्टबालक... ! भवतः पूजासमाप्तिपर्यन्तं यमधर्मेण मया प्रतीक्षा करणीया वा ? *(हासः)*

मार्कण्डेयः - भगवन् ! शिवपूजासमये पीडा न उचिता । यदि पीडयति तर्हि भगवान् शङ्करः भवन्तं दण्डयति ।

यमधर्मः - *(सरोषम्)* आह् पाप !

मार्कण्डेयः - यमधर्म ! शिवः यदि कुपितः भवति तर्हि सः भवन्तमपि मारयितुं समर्थः । अतः शिवस्य कोपं मा जनयतु । जागरूकः भवतु ।

यमधर्मः - *(सावज्ञम्)* अरे.... कः सः भवतः शिवः ? सः किं करोति इति अहमपि पश्यामि ।

मार्कण्डेयः - मास्तु महाभाग ! शिवस्य कोपं सोढुं न कोऽपि शक्नोति ।

यमधर्मः - अहो, तादृशाः शताधिकाः शिवाः मयैव मृत्युलोकं प्रति नीताः। सः मां किं वा कर्तुं शक्नुयात् ...। *(पाशक्षेपम् अभिनयति)* पश्यतु, मम पाशेन भवान् इदानीं बद्धः । भवतः प्राणान् आकर्षामि । *(आकर्षणस्य अभिनयः)*

मार्कण्डेयः - भगवन् ! शङ्कर ! भवानेव रक्षतु । *(नेत्रे निमील्य शिवलिङ्गम् आलिङ्ग्य)* ॐ नमः शिवाय, ॐ नमः शिवाय ।

*(रङ्गस्य दक्षिणभागे शिवः प्रविशति ।)*

शिवः - *(स्वगतम्)* अहो, यमधर्मस्य कीदृशं दौष्ट्यम् ! मम परमभक्तस्य मार्कण्डेयस्य प्राणान् नेतुं स्वयमेव आगतः । पश्यामि, किं भविष्यति इति । *(पश्यन् तिष्ठति)*

यमधर्मः - किमिदम्, दुष्टः बालः मां तिरस्कुर्वन् तथैव पूजां कुर्वन् अस्ति...! भवतु । सम्पूर्णं बलं प्रयुज्य एतस्य प्राणान् आकर्षामि ।

शिवः - *(स्वगतम्)* यमधर्मः बुद्धिहीनः इव व्यवहरति । शिवभक्तं बालं कथम् एवं पीडयति... ! भवतु, एकेनैव प्रहारेण यमधर्मस्य पराजयं सम्पादयामि । तस्य वक्षःस्थले पादप्रहारं करोमि ।

*(समीपं गत्वा पाशाकर्षणे मग्नस्य यमस्य वक्षसि पादप्रहारं करोति ।)*

यमधर्मः - हा...! *(पतति ततः शिवं दृष्ट्वा)* भगवन् ! शङ्कर ! मम अपराधं क्षाम्यतु ।

शिवः - उत्तिष्ठतु यमधर्म ! यद्यपि एतस्य बालस्य आयुष्यम् अद्य समाप्तं, तथापि एषः मम परमभक्तः इति कृत्वा अहम् एतस्मै पुनः आयुःप्रदानं कृतवान् अस्मि । अतः एतस्य स्पर्शं कर्तुं भवान् न शक्नोति । भवान् स्वलोकं गन्तुम् अर्हति ।

यमधर्मः - तथैव अस्तु भगवन् । *(मृत्युम् उद्दिश्य)* मृत्यो.., वयं गच्छामः ।

मृत्युः - यथाज्ञापयति देवः ।

*(द्वौ अपि गच्छतः )*

शिवः - प्रवृत्तं किमपि अजानन् मार्कण्डेयः मम एव ध्यानं कुर्वन् अस्ति । भवतु, आत्मानं प्रदर्श्य मम प्रियभक्तं सन्तोषयामि. । *(समीपं गत्वा)* वत्स, मार्कण्डेय !

मार्कण्डेयः - *(नेत्रे उन्मील्य दृष्ट्वा)* भगवन् ! शङ्कर ! प्रभो ! महादेव ! नमो नमः, नमो नमः । *(नमस्करोति)*

शिवः - भक्त, मार्कण्डेय ! भवतः तपसा अहं सन्तुष्टः अस्मि । भवतः शिवभक्त्या अहं सम्प्रीतः अस्मि । अपेक्षितं वरं याचतु । भवान् यद् इच्छति तत् अहं ददामि ।

मार्कण्डेयः - भगवन् ! भवतः दिव्यदर्शनेनैव अहं कृतार्थः अस्मि । तथापि 'पुत्रः अल्पायुः' इति मम मातापित्रोः अत्यन्तं दुःखम् अस्ति । अतः मां दीर्घायुष्मन्तं करोतु । कल्पान्तपर्यन्तं मम आयुष्यं ददातु ।

शिवः - न केवलं कल्पान्तपर्यन्तम्, अपि तु सप्तकल्पपर्यन्तं भवान् जीवतु ।

मार्कण्डेयः - भगवन् ! अनुगृहीतोऽस्मि ।

शिवः - एवमेव इतःपरं लोके ये मां भक्त्या पूजयन्ति तेषामपि आयुष्यम् अधिकं भवतु ।

मार्कण्डेयः - भगवन् ! करुणामय ! भवतः अनुग्रहः सर्वदा अस्मान् रक्षतु ।

शिवः - तथास्तु । *(पृष्ठतः श्लोकः श्रूयते ।)*

*मृकण्डुसूनोर्भक्तस्य यमपाशाद्विमोचक ।*
*मृत्युञ्जय नमस्तुभ्यं मृत्युं हर नमाम्यहम् ।।*

*(पटाक्षेपः)*

# ज्ञानी जनकः

**पात्राणि –**

नारदः

जनकः

मन्त्री

नर्तक्यौ

सैनिकौ

मालाकारी

द्यूतकराः (त्रयः)

ऐन्द्रजालिकः

नागरिकः

## – प्रथमं दृश्यम् –

*(अरण्यमार्गः)*

*(वीणापाणिः नारदः प्रविशति ।)*

नारदः – प्रणमत नारायणम् । सततं प्रणमत नारायणम् ।
सुन्दरनयनं चन्दिरवदनम् । प्रणमत नारायणम् ।।
सृष्टि-स्थिति-लय-कारणभूतम् ।
जनिमरणादि-क्लेशविरहितम् ।। प्रणमत ।।
दुष्टविनिग्रहकर्मणि सक्तम् ।
शिष्टानुग्रहकार्योद्युक्तम् ।। प्रणमत ।।

*(स्वगतम्)* नारायण ! नारायण... !

विचित्रः खलु अस्य जगतः जनानां व्यवहारः ! अवश्यंभाविनं मृत्युं जानन्तोऽपि एते जनाः मोक्षोपायं कदापि न चिन्तयन्ति । अर्थकामार्जने मग्नाः न स्मरन्ति धर्मं, न वा मोक्षम् । हू.... *(निःश्वस्य)* कथं वा एतेषाम् अभ्युदयः स्यात्... ? केवलं सांसारिकविषयान् एव ध्यायतः, परब्रह्मविचारम् अकुर्वतः एतान् पश्यतः मम मनः विषादम् अनुभवति । प्रायः लोके सर्वेऽपि जनाः एवमेव व्यवहरन्ति ।

हू... किन्तु एवंविधेऽपि लोके केचन महात्मानः सन्ति इति श्रूयते, ये परब्रह्मचिन्तनपराः, विदितवेदितव्याः, ज्ञातसकलशास्त्रसाराः । तेषु अन्यतमः अस्ति राजर्षिः जनकः । आं... विदेहाधिपतिः जनकमहाराजः राजापि ऋषिरिव । अतः एव सः राजर्षिरिति ख्यातः । परमप्राज्ञः सः सकलं धर्मरहस्यं जानातीति प्रतीतिः अस्ति । अद्य तं दृष्ट्वा तस्य ब्रह्मचिन्तनप्रकारं ज्ञात्वा आगन्तव्यं मया । अतः इतः साक्षात् गच्छामि विदेहं प्रति ।

प्रणमत नारायणम् । सततं प्रणमत नारायणम् ।

*(गच्छति)*

## - द्वितीयं दृश्यम् -

*(जनकमहाराजस्य आस्थानम् । सिंहासने सुखोपविष्टः जनकः, पार्श्वे मन्त्री । नर्तक्यौ नृत्यं कुरुतः ।)*

पाहि पाहि परमेश्वर पाहि ।
त्राहि त्राहि जगदीश्वर त्राहि ।।
कैलासेश्वर परशिव शुभकर ।
गौरीमानसकमलदिवाकर ।।१।।
सामवेदप्रिय नाट्यगानप्रिय ।
शङ्कर स्मरहर वर षण्मुखप्रिय ।।२।।
मृत्युञ्जय सुमनोहर शङ्कर ।
त्रिपुरान्तक हर चन्द्रकलाधर ।।३।।

*(नारदः प्रविशति । नृत्यं पश्यन् पार्श्वे तिष्ठति । गीतसमाप्तेः अनन्तरमपि नृत्यं प्रचलदेव भवति । जनकः नृत्यमेव पश्यन् भवति ।)*

नारदः - *(स्वगतम्)* नारायण... नारायण... । किमिदम् आश्चर्यं पश्यन् अस्मि अहम् ! यः ब्रह्मचिन्तने एव रतः स्यादिति मया चिन्तितं, सोऽयं महाप्राज्ञः जनकमहाराजः सुखलोलुपः सन् नृत्यवीक्षणे मग्नः ! हू.... *(निःश्वस्य)* किं वा ब्रह्मचिन्तनं कुर्यात् इतः परम् एषः ? भवतु... इतः प्रतिनिवर्तनमेव वरम् इति मन्ये । *(विचिन्त्य)* तथापि मम आगमनं जनकराजं संसूच्य एव गच्छामि...। *(प्रकाशम्)* जयतु महाराजः !

*(जनकः न शृणोति । नृत्यं पश्यन् हस्ततालं कुर्वन् अस्ति ।)*

नारदः - *(उच्चैः)* जयतु महाराजः, जयतु विदेहाधिपतिः ।

जनकः - *(नारदं दृष्ट्वा - स्वगतम्)* ओ.... नारदमहर्षिः । *(हस्तनिर्देशं करोति । नर्तक्यौ गच्छतः ।) (नारदम् उद्दिश्य)* महर्षे ! अभिवादये... । *(मन्त्री अपि वन्दते ।)*

नारदः - आयुष्मान् भव । आयुष्मान् भव ।

जनकः - भगवन्, एतदासनम् अलङ्करोतु... ।

नारदः - नास्ति आसनालङ्करणे मम अद्य अवकाशः ।

जनकः - *(सविस्मयम्)* महर्षे, किमेवं वदति भवान्... ? सुदूरतः एतावत्पर्यन्तम् आगतवतः भवतः आसनालङ्करणे अवकाशः कुतो नास्ति..., ?

नारदः - महाराज ! ममागमनकारणम् अन्यदेव आसीत् । परन्तु अत्रत्यां परिस्थितिं पश्यामि चेत् अत्र ममागमनप्रयोजनं न सिद्ध्यतीति प्रतिभाति । अतः आसनालङ्करणे अवकाशः नास्ति इति उक्तम् ।

जनकः - ऋषिवर ! भवदागमनप्रयोजनं किमिति वदति चेत् विदेहाधिपतिः जनकः अहं प्रयत्नशतेनापि तत् सफलयितुं प्रयत्नं करोमि ।

नारदः - मया भवतः सकाशात् ज्ञातव्यं किञ्चिदस्ति...। अतः एव आगतं मया... ।

जनकः - किमेवं माम् उपहसति मुनिवर ! परमज्ञानिना भवता मत्तः, अज्ञानिनः जनकादपि ज्ञातव्यं किञ्चिदस्ति ! हू... *(हासः)* सम्यगस्ति मुनेः विनोदचापलम् ।

नारदः - राजन्..... नाहं विनोदचापलेन अत्र आगतः । परन्तु भवतः सकाशात् किञ्चित् ज्ञातव्यम् इत्येव आगतवान् ।

जनकः - एवम्... ? भवतु तर्हि....। महर्षे..., आज्ञापयतु मया किं ज्ञापनीयमिति । तत् ज्ञापयितुम् अहं समर्थः चेत् निश्चयेन ज्ञापयामि ।

नारदः - परन्तु इदानीं तस्य प्रसक्तिरेव नास्ति महाराज । मम जिज्ञासां परिहर्तुं भवान् न शक्नोति इति मया इदानीं सम्यक् ज्ञातमस्ति ।

जनकः - ब्रह्ममानसपुत्रस्य नारदमहर्षेः जिज्ञासां परिहर्तुं क्षुद्रः अयं जनकः शक्नोति इति ममापि भ्रान्तिः नास्ति महामुने । तथापि, यदि भवता उच्येत तर्हि प्रयत्नं वा कुर्याम् ।

नारदः - किमधिककथनेन ? भवतः ब्रह्मचिन्तनप्रकारः मया ज्ञातव्यः आसीत् । परन्तु अत्र पश्यामि चेत् भवद्विषये 'जनकः ब्रह्मचिन्तनपरः आसीत्'- इति भूतकालप्रयोगः एव उचितः इति भासते ।

जनकः - ओ... मम ब्रह्मचिन्तनप्रकारः ज्ञातव्यः इति महर्षेः विचारः वा ?

नारदः - आम्..., सः एव विचारः आसीत् । परन्तु ईदृश्याम् अवस्थायां विद्यमानं भवन्तं दृष्ट्वा मम विचारः तत्रैव अन्तर्हितः ।

जनकः - किमर्थं महर्षे ?

नारदः - अत्रागमनात् पूर्वं मया कल्पितं भवतः रूपम् अन्यदेव आसीत् महाराज... !

जनकः - वदतु महात्मन् ! तत् कीदृशं रूपम्... ?

नारदः - कुशासने उपविश्य, अक्षमालां गृहीत्वा, नासिकाग्रमेव पश्यन् भवान् ध्यानपरः भवेदिति चिन्तितमासीत् मया ।

जनकः - हू... ।

नारदः - परन्तु अत्र पश्यामि...., भवान् तु प्राकृतः जनः इव आगतस्य मम आह्वानशब्दमपि अशृण्वन्, नर्तक्याः हावभावादिविलासं पश्यन् आनन्दम् अनुभवन् अस्ति... । ब्रह्मचिन्तनं तु भवतः दूरादेव अपास्तम् । अत एव उक्तं 'मम विचारः तत्रैव अन्तर्हितः' इति... ।

जनकः - क्षाम्यतु महर्षे... ! तथापि यदि भवान् अनुमन्यते तर्हि किञ्चित् निवेदयितुम् इच्छामि ।

नारदः - निवेदयतु । शृणोमि तावत् ।

जनकः - महर्षे ! मदीयः ब्रह्मचिन्तनक्रमः कश्चित् अस्ति एव । भवान् अङ्गीकरोति चेत् तं क्रमं विज्ञापयितुं यत्नं करोमि ।

नारदः - हू.. *(साकूतम्)* अद्यापि ब्रह्मचिन्तनं करोति भवान् ! कथमिदं

शक्यम्... ! *(हसति)*...... राजन् ! कः भवतः चिन्तनक्रमः... ?
*(सोपहासम्)* इदमिदानीं मया यद् दृष्टं तदेव खलु.... ?

जनकः - महर्षे..., कश्चन क्रमस्तु अस्ति एव । यदि भवान् मम किञ्चित् साहाय्यं करिष्यति तर्हि अहं तं क्रमं ज्ञापयिष्यामि ।

नारदः - मया साहाय्यं करणीयम्... ? वदतु, कीदृशं तत् साहाय्यम्... ?

जनकः - साहाय्यं तु अल्पमेव । किन्तु भवान् 'निश्चयेन साहाय्यं करिष्यामि' इति अङ्गीकरोति चेदेव तस्य स्वरूपं वदामि ।

नारदः - मया कर्तुं शक्यते चेत् निश्चयेन करिष्यामि । वदतु, कीदृशं साहाय्यम् अपेक्षितम्... ?

जनकः - मन्त्रिवर... !

मन्त्री - आज्ञापयतु महाराज !

*(जनकः मन्त्रिणः कर्णे वदति । मन्त्री शिरश्चालयति, गत्वा जलपूर्णं पात्रम् आनयति ।)*

जनकः - महर्षे ! साहाय्यं तु एतावदेव करणीयम्.... । *(पात्रं प्रदर्शयन्)* एतदस्ति जलपूर्णं पात्रम् । भवता एतत् पात्रं हस्ताभ्यां गृहीत्वा..., इतः प्रस्थाय, नगरस्य राजमार्गेण गत्वा, राजप्रासादं प्रदक्षिणीकृत्य अत्र आगन्तव्यं, तावदेव ।

नारदः - *(हसति)* महाराज, सत्यम्..., एतदेव साहाय्यम् अपेक्षते भवान् ?

जनकः - आं, तावदेव ।

नारदः - हू... महाराजस्यापि विनोदचापलम् ! भवतु, एतावदेव खलु, पश्यतु, अहं प्रस्थितः एव । *(पात्रं गृह्णाति ।)*

जनकः - किन्तु महर्षे ! अन्यदपि किञ्चित् वक्तव्यमस्ति ।

नारदः - वदतु.. ।

जनकः - *(दृढस्वरेण)* पात्रे स्थितं जलं सर्वमपि तथैव रक्षितं भवेत् । बिन्दुपरिमितं जलमपि अधः न पतेत् ।

नारदः - एतत्तु किञ्चिदिव दुष्करं जातम् । भवतु..., अवहितमनसा करिष्यामि ।

जनकः - अन्यदपि किञ्चित्.... एवं वदन् अयं जनः क्षन्तव्यः...।

नारदः - किं तत्... ? निर्विशङ्कं वदतु राजन् !

जनकः - यदि भवता प्रत्यानीयमाने एतस्मिन् पात्रे बिन्दुपरिमितस्यापि जलस्य न्यूनता स्यात् तर्हि भवतः शिरश्छेदः क्रियते... जागरूकः भवतु... !

*(वेगेन निर्गच्छति । मन्त्री अपि अनुसरति ।)*

नारदः - *(स्वगतम्)* नारायण.... नारायण.... ।

महदिदं कष्टम् आपतितं खलु । किं करणीयम् इदानीम् ? *(विचिन्त्य)* अस्तु नाम, प्रासादं प्रति एकं प्रदक्षिणं खलु..., कथमपि कृत्वा शीघ्रमेव प्रत्यागच्छामि । नारायण.... नारायण.... । *(गच्छति)*

## – तृतीयं दृश्यम् –

*(राजमार्गः, जनाः इतस्ततः सञ्चरन्ति । द्वौ सैनिकौ इतस्ततः सञ्चरतः, नारदः प्रविशति... जागरूकतया पात्रं गृहीत्वा गच्छति ।)*

मालाकारी - *(प्रविश्य)* भोः, पुष्पाणि आवश्यकानि वा पुष्पाणि... ! कुन्द-केतकी-चम्पक-सुगन्धराजपुष्पाणि आवश्यकानि वा... ? प्रत्यग्राणि पुष्पाणि... ।

*(नारदं दृष्ट्वा - समीपं गत्वा)*

भोः स्वामिन्... पुष्पाणि आवश्यकानि वा.. ? यदि भवान् पुष्पाणि धरति तर्हि इतोऽपि सुन्दरः दृश्यते..। एकां मालां ददामि वा... ?

*(नारदः न शृणोति, न पश्यति च ।)*

*(स्वगतम्)* ओ, बधिरः स्यात् । भवतु, अहम् अग्रे गच्छामि...। *(प्रकाशः)* पुष्पाणि आवश्यकानि वा पुष्पाणि... । *(गच्छति । नारदोऽपि गच्छति ।)*

## - चतुर्थं दृश्यम् -

*(मार्गः, त्रयः द्यूतकराः अक्षक्रीडायां निरताः सन्ति ।)*

प्रथमः - जय महारुद्र... *(अक्षैः क्रीडित्वा)* पञ्च....ह..ह..ह.. अद्य अहमेव जयं प्राप्नोमि.... ह..ह..ह.. ।

द्वितीयः - मम पाठे.... मम पाठे.... । जय महाकाल... *(क्रीडित्वा)* सप्त.... ह..ह..ह.. भाव.... अद्य जयः मम एव... ह..ह..ह.. ।

तृतीयः - मम पाठे... मम पाठे... । जय शम्भो शङ्कर... *(क्रीडित्वा)* त्रीणि.... ह..ह..ह.. भद्र... पश्यतु... अद्य जयः मम एव.... ।

*(नारदः प्रविशति । तान् न पश्यति ।)*

प्रथमः - अरे... तत्र पश्यतु... तत्र कश्चित् आगच्छन् अस्ति ।

द्वितीयः - यदि सोऽपि क्रीडितुम् आगच्छति तर्हि आहत्य चत्वारः भवामः । तदा क्रीडायां पूर्णतृप्तिः भवति... ।

तृतीयः - आं, तम् अपि आह्वयामः...
*(नारदसमीपं गत्वा)* भोः महाशय, आगच्छतु भोः, क्रीडामः.... ।

*(नारदः पश्यन् अपि न पश्यति ।)*

प्रथमः - भोः मूर्ख.. ! अस्माभिः सह क्रीडित्वा द्यूतानन्दम् अनुभवतु... ।

*(नारतः तथैव अस्ति ।)*

द्वितीयः - भाव..., पत्नीवाक्यपरिपालकः कश्चन मूढः स्यात् एषः... । पत्न्या जलोद्धरणे नियुक्तः स्यात् । स तु नागच्छति । त्रयः एव क्रीडामः....

आगच्छन्तु... ।

*(सर्वे उपविश्य पुनः क्रीडन्ति । नारदः गच्छति ।)*

## – पञ्चमं दृश्यम् –

*(मार्गस्य अन्यः भागः ।)*

ऐन्द्रजालिकः - भोः आगच्छन्तु... इन्द्रजालं पश्यन्तु... महेन्द्रजालं पश्यन्तु... ! *(शब्दं करोति । चत्वारः जनाः आगत्य तं परितः तिष्ठन्ति । ऐन्द्रजालिकः शब्दं कुर्वन् एव अस्ति ।)*

नागरिकः- *(नारदसमीपं गत्वा)* भोः महाशय..., इन्द्रजालप्रदर्शनं प्रचलति.... द्रष्टुम् आगच्छतु भोः... !

*(नारदः पश्यन् अपि न पश्यति ।)*

नागरिकः- *(स्वगतम्)* कीदृशः जनः भोः ! इन्द्रजालेऽपि आसक्तिः नास्ति इत्युक्ते ... परमविरक्तः संन्यासी स्यात्... !

*(सर्वे इन्द्रजालं पश्यन्ति.., नारदः गच्छति ।)*

नागरिकः- आगच्छतु भाव, वयम् इन्द्रजालं पश्यामः ।

## – षष्ठं दृश्यम् –

*(जनकमहाराजस्य आस्थानम् । नारदः प्रविशति ।)*

जनकः - *(नारदं दृष्ट्वा)* आगच्छतु महर्षे... स्वागतम्... ।

नारदः - राजन्.... *(दीर्घं श्वासोच्छ्वासं कृत्वा)* मम हस्तौ भग्नौ इव... । नेत्रे स्फुटिते इव... ! *(पात्रम् अधः स्थापयित्वा)* हा... इदानीं जीवितः अस्मि... ! *(निःश्वसिति)*

*(मन्त्री पात्रम् अन्तः नयति ।)*

जनकः - ऋषिवर..., मार्गे भवता राजभटाः दृष्टाः खलु... ?

नारदः - *(साश्चर्यम्)* राजभटाः... ? नैव दृष्टाः ।

जनकः - मालाकारी कापि महिला दृष्टा... ?

नारदः - (स्मरणम् अभिनीय) नैव राजन्... कापि न दृष्टा...।

जनकः - द्यूतकराः केऽपि दृष्टाः... ?

नारदः - ऊ..हू.. । केऽपि न दृष्टाः... ।

जनकः - ऐन्द्रजालिकः वा दृष्टः खलु... ?

नारदः - नैव राजन्, कोऽपि न दृष्टः ।

जनकः - भवतु महर्षे ! नगरस्य मार्गाणां, मार्गे स्थितानां भवनानां सौन्दर्यं वा भवता दृष्टं स्यात् खलु... ?

नारदः - नैव राजन् नैव... । मया किमपि न दृष्टम् ।

जनकः - किमर्थं महर्षे... ? पुरतः स्थितं, पार्श्वे विद्यमानमपि न दृष्टम् इत्युक्ते.... को वा विश्वसिति... ?

नारदः - राजन् ! सर्वं दृष्टमपि अदृष्टमिव । यतः मम मनः अत्रैव.... एतस्मिन् पात्रे एव संलग्नमासीत् खलु ! यदि मम मनः किञ्चित् वा विचलितं स्यात् तर्हि भवता दीयमानस्य दण्डनस्य पात्रम् अहं भवेयम् इति प्रतिपदं स्मरता मया न किमपि अन्यत् दृष्टम्... न वा श्रुतम् ।

जनकः - *(हसति)* एषः एव मम ब्रह्मचिन्तनप्रकारः महर्षे !

नारदः - इत्युक्ते... भवता बुद्ध्या एव अहम् एवं प्रेषितः... ?

जनकः - आम् ऋषिवर... । इदानीं ज्ञातवान् खलु मम ब्रह्मचिन्तनप्रकारम् । प्रतिक्षणम् उपसर्पन्तं मृत्युं स्मरन् अहम् ऐहिकजगतः सुखभोगान् पश्यन् अपि न पश्यामि । शृण्वन्नपि न शृणोमि । यतः मम चित्तं तु सर्वदा ब्रह्मणि एव लीनं भवति । परब्रह्मणि एव संलग्नं भवति ।

नारदः - जनाः जनकमहाराजं महात्मानं किमर्थं मन्यन्ते इति अहम् इदानीं ज्ञातवान् राजर्षे ! संसारे सक्तोऽपि भवान् कमलपत्रे स्थितं जलमिव निर्लिप्तः । वनेषु निवसतः सर्वसङ्गपरित्यागिनः तपस्विनः अपि भवान् अतिशेते ।

आं... भवानेव वास्तविकः ब्रह्मवादी ।
भवानेव वास्तविकः ब्रह्मज्ञानी ।
भवानेव वास्तविकः ब्रह्मवेत्ता ।
ब्रह्मवादिने ते नमो नमः ।।

*(पटाक्षेपः)*

## – प्रथमं दृश्यम् –

*(जीर्ण गृहम् । गृहस्य यजमानः कृपणः खल्वाटः देवदत्तः देवीविग्रहस्य पुरतः उपविश्य प्रार्थयमानः अस्ति ।)*

देवदत्तः - *(देवीं प्रार्थयमानः)* अये, भगवति ! एतावन्ति वर्षाणि अहं भवतीं भक्त्या पूजितवान् । श्रद्धया आराधितवान् । तथापि किमर्थं भवती प्रसन्ना न भवति ? मम एकामेव प्रार्थनां किमर्थं न सफलयति ? अम्ब, अद्य वा भवत्या अनुग्रहः करणीयः एव । करुणामयि ! मयि कृपां करोतु । माम् अनुगृह्णातु ।

सेवकः - *(प्रविश्य)* देव.... देव.... !

देवदत्तः - भोः.... दास.... ! गृहकार्याणि सर्वाणि समापितानि वा ?

सेवकः - आं देव... । *(शिरसि कण्डूयनम् अभिनयति)*

देवदत्तः - उद्याने जलसेचनं कृतवान् वा ?

सेवकः - आम्... ।

देवदत्तः - गृहे मार्जनादिकं कृतम् ?

सेवकः - आम् ।

देवदत्तः - वस्त्राणि प्रक्षालितानि वा ?

सेवकः - ........

देवदत्तः - किमर्थम् उत्तरं नास्ति ?

सेवकः - अहं किञ्चिदिव बहिः गत्वा आगच्छामि । अनन्तरं तत् करोमि ।

देवदत्तः - बहिः गच्छति वा ? किमर्थम् ?

सेवकः - नापितस्य समीपम् *(शिरः दर्शयन्)* एतदर्थं गन्तव्यमासीत् ।

देवदत्तः - *(असूयया तस्य शिरः पश्यन्, स्वगतम्)* आह्.... कथं प्रवृद्धाः

सन्ति एतस्य गर्दभस्य शिरसि केशाः, विन्ध्यपर्वते वर्धमानाः वृक्षाः इव ! परन्तु.... मम शिरसि तु शिलातले इव न किञ्चित् प्ररोहति... ! *(प्रकाशम्)* किं भोः, गतपक्षे एव नापितसमीपं गतवान् आसीत् खलु भवान्... ? तदा एकः दीनारः मया भवदर्थं व्ययितः ।

सेवकः - सत्यं श्रीमन्, परन्तु पश्यतु भवानेव, कथं केशाः पुनः प्रवृद्धाः *(दर्शयति)*

देवदत्तः - वर्धन्ते वर्धन्ते ..., तदर्थं नास्ति जलस्य अपेक्षा, न वा गोभरस्य । अतः वर्धन्ते एव ! गच्छतु इतः.... सर्वाणि कार्याणि प्रथमं करोतु । यावदहं न वदामि तावत् नापितसमीपं किं, कुत्रापि न गन्तव्यम् । गच्छतु अन्तः... । *(सेवकः गच्छति)*

देवदत्तः - *(किञ्चित् विचिन्त्य, स्वगतम्)* अथवा .... यदि नापितसमीपं न गच्छति तर्हि तस्य शिरसि केशाः इतोऽपि वर्धन्ते एव । वर्धमानाः तस्य केशाः मम दुःखम् अधिकं कुर्वन्ति । अतः एवं करोमि.... । (प्रकाशम्) रे दास... आगच्छतु अत्र ।

सेवकः - *(आगच्छति)* देव..

देवदत्तः - दास.... ! इदानीमेव तत्र गच्छतु ... । तथा मुण्डनं कारणीयं येन भवतः शिरः अपि *(स्वस्य शिरः दर्शयन्)* एवमेव दृश्येत । केशलेशोऽपि तत्र न दृश्येत ! हा... स्मरतु... गच्छतु... इदानीमेव कारयित्वा आगच्छतु । एतं दीनारं गृह्णातु । *(सेवकः आश्चर्येण दृष्ट्वा दीनारं स्वीकृत्य निर्गच्छति ।)*

देवदत्तः - *(पुनः विग्रहं पश्यन्)* पश्यतु भगवति... ! किमर्थम् एवम्... ? मया कः अपराधः कृतः... ?

*(नेपथ्ये - 'देवदत्तमहाभाग... देवदत्तमहाभाग... !')*

देवदत्तः - कः तत्र ... ? अन्तः आगच्छतु ।

चन्दनकः - *(प्रविश्य)* अहं चन्दनकः, अत्रैव समीपे वसामि...।

देवदत्तः - हू.... उपविशतु । कः विशेषः.. ?

चन्दनकः - ह... ह... *(हसन्)* इदानीं मम वाणिज्ये कश्चन क्लेशः उत्पन्नः अस्ति... ।

देवदत्तः - तदर्थं मया किं करणीयम् ?

चन्दनकः - भवान् कृपया यदि एकशतं दीनारान् मह्यं दास्यति तर्हि मम क्लेशः परिहृतः स्यात् । अहं दीनारान् आगामिपक्षे एव प्रत्यर्पयिष्यामि ।

देवदत्तः - किं शतं दीनाराः ... !

चन्दनकः - आम्, ऋणरूपेण ददातु... । शीघ्रमेव प्रत्यर्पयिष्यामि ।

देवदत्तः - भोः, मम समीपे धनस्य महान् सङ्ग्रहः एव अस्ति इति चिन्तितवान् वा ? मम परिस्थितिं यदि जानाति तर्हि भवानेव मह्यम् ऋणं दद्यात्.... !

चन्दनकः - तथा न वदतु महोदय... ! मम परिस्थितिः किञ्चिदिव गम्भीरा अस्ति । कृपया साहाय्यं करोतु ।

देवदत्तः - अरे..., उक्तं चेत् न ज्ञायते वा ? नास्ति इत्युक्ते नास्ति एव ।

चन्दनकः - कृपां कृत्वा न्यूनातिन्यूनं पञ्चाशत् दीनारान् वा ददातु महोदय... !

देवदत्तः - भवते दातुं दीनारान् अहं कुतः आनयामि भोः ... ? चौर्यं करोमि वा ? पञ्चाशत् किम्, एकं दीनारमपि दातुम् अहं न शक्नोमि ।

चन्दनकः - तथापि....

देवदत्तः - तथापि अपि नास्ति, किमपि नास्ति... । गन्तुम् अर्हति भवान्... ।

*(पुनः विग्रहसमीपं गच्छति)*

चन्दनकः - *(स्वगतम्)* अरे खल्वाट ! यथेष्टं धने सत्यपि किञ्चिदपि न ददाति ।

ऋणरूपेण ददातु इत्युक्तं चेदपि धनमेव नास्तीति वदति । भवतु... *(विचिन्त्य)* एकम् उपायं कृत्वा एतस्मात् अधिकं धनम् अपहरामि । *(समीपं गत्वा)* आ... देवदत्त महोदय... !

देवदत्तः - *(दृष्ट्वा)* ओ... पुनः, किमर्थम् आगतवान् ?

चन्दनकः - एकं विषयं वक्तुं विस्मृतवान् । अतः पुनः आगतवान् ।

देवदत्तः - धनविषयः चेत् पुनः प्रश्नः एव नापेक्षितः ।

चन्दनकः - तत् नैव महोदय ! अपि तु भवतः शिरसः विषये ...

देवदत्तः - *(कोपेन)* मम शिरसः विषये भवान् किं वदति.. ?

चन्दनकः - मा कुप्यतु भवान् । गतपक्षे मया नगरं प्रति गतम् आसीत् । तत्र मया किञ्चित् आश्चर्यं दृष्टम् ।

देवदत्तः - किं तत्... ?

चन्दनकः - तत्र कश्चन महावैद्यः आगतः आसीत् । स तु किञ्चित् सिद्धौषधं वितरन् आसीत् । तस्य औषधस्य प्रभावेण खल्वाटानां शिरसि अपि केशाः उत्पद्यन्ते इति श्रुतम् ।

देवदत्तः - *(कुतूहलेन)* सत्यं वा ... ?

चन्दनकः - हू... एतावदेव मया वक्तव्यम् आसीत् । उक्तवान्.... । अहं गच्छामि । विलम्बः भवति । *(प्रस्थितः इव अभिनयति ।)*

देवदत्तः - अरे मित्र... ! किञ्चित् तिष्ठतु भोः ... ! *(समीपं गत्वा तम् आकृष्य समीपम् आनीय)* आगच्छतु... उपविशतु... । भोः चन्दनक... ! सः वैद्यः भवता दृष्टः वा ?

चन्दनकः - आं, दृष्टः... ।

देवदत्तः - तत् औषधं वस्तुतः तावत् प्रभावि अस्ति वा ?

चन्दनकः - अथ किम् ? नगरे निवसता मम मित्रेण तदौषधं स्वीकृतम् । इदानीं

तस्य शिरसि केशाः विराजन्ते... ! भवतु, अहं प्रतिष्ठे... ।

देवदत्तः - अरे उपविशतु मित्र... ! सः वैद्यः इदानीं कुत्र अस्ति....?

चन्दनकः - प्रायशः अस्माकं ग्राममेव आगतवान् अस्ति इति मन्ये ।

देवदत्तः - एवं वा.. ? *(सांनुनयम्)* तर्हि भवान् तम् अन्विष्य अत्र आनयतु मित्र... !

चन्दनकः - किं करोमि श्रीमन् ! मम तावान् अवकाशः कुत्र ? ऋणान्वेषणार्थं मया इतोऽपि कति गृहाणि गन्तव्यानि, कः जानाति ? अस्तु, अहं गच्छामि... ।

देवदत्तः - तिष्ठतु मित्र... । भवता ऋणम् अपेक्षितं किल... ! अहं दास्यामि । सन्मित्रे विनियुक्ते सत्येव खलु धनस्य सार्थक्यम् !

चन्दनकः - सत्यम्... परं मया शतं दीनाराः अपेक्षिताः ... ।

देवदत्तः - दास्यामि मित्र... ! प्रथमं भवान् इदानीमेव तं वैद्यराजम् अत्र आनयतु । अनन्तरम् अहं भवते धनं दास्यामि ।

चन्दनकः - परन्तु सः वैद्यः औषधार्थम् अधिकं धनं स्वीकरोति... ।

देवदत्तः - स्वीकरोतु नाम... । तत्र किमस्ति ? भवान् प्रथमं तम् आनयतु ।

चन्दनकः - तर्हि ऋणार्थम् अन्यत्र गमनं नापेक्षितम्.... ?

देवदत्तः - अरे, अहं दास्यामि किल, पुनः किमर्थम् अन्यत्र अटति ? गच्छतु, शीघ्रं तम् आनयतु ... ।

चन्दनकः - तर्हि अहं प्रयत्नं करोमि.. । *(किञ्चित् दूरं गत्वा)* परन्तु एकः विचारः.... सः वैद्यः यद् यद् वदति, तत् सर्वम् अङ्गीकर्तव्यम्... नो चेत् सः कुपितः भविष्यति... ।

देवदत्तः - अस्तु, तथैव करिष्यामि । भवान् गच्छतु । *(चन्दनकः गच्छति । देवदत्तः देवीविग्रहं पश्यन् सन्तोषेण)* हा.. भगवति.. एतावतां

दिनानां मम पूजा अद्य फलिता इव दृश्यते ... ! मम शिरसि...
मम शिरसि... केशाः उत्पद्यन्ते... ! भगवति... ! अहं धन्यः.... !

चन्दनकः - *(प्रविश्य)* देवदत्तमहोदय... !

देवदत्तः - अरे, भवान् न गतवान् वा ?

चन्दनकः - भवतः सौभाग्यं किमिति वर्णयामि श्रीमन् ! सः वैद्यः अत्रैव मिलितः । तम् आनीतवानेव अहम्... ।

देवदत्तः - आ... आनीतवान् वा.. ? कुत्र कुत्र... ? शीघ्रम् अन्तः प्रवेशयतु ।

चन्दनकः - तिष्ठतु, तिष्ठतु... त्वरा मास्तु । अहं तम् आह्वयामि । *(पुनः गत्वा वैद्येन सह प्रविशति।)* इत इतो देवः... ।

वैद्यः - *(प्रविश्य)* जयतु अघोरेश्वरः ! जयतु धन्वन्तरिः... !!

देवदत्तः - *(सविनयम्)* एवम् आगच्छन्तु भवन्तः... । अत्र उपविशन्तु । देवदत्तोऽहं अभिवादये.. । आ... मित्रश्रेष्ठ, चन्दनक.. ! भवान् अपि उपविशतु... अरे दास... पानीयम् आनयतु... ।

चन्दनकः - *(वैद्यम्)* एषः एव देवदत्तमहोदयः, मम परममित्रम् । भवतः वार्तां श्रुत्वा सः अतीव सन्तुष्टः । भवन्तम् आनेतुमेव मां प्रेषितवान् ।

वैद्यराजः - साधु अनुष्ठितं भवता । भवतु... वदतु, इदानीं मया किं करणीयम् ?

देवदत्तः - तद् अहं वदामि । पश्यन्तु भवन्तः । मम जीवने मया सर्वमपि प्राप्तमस्ति । धनकनकादिकं, सेवकाः, क्षेत्रं, वाणिज्यं सर्वमपि अस्ति । परन्तु... परन्तु... एषा एव न्यूनता मम... *(केशरहितं शिरः दर्शयति)*

चन्दनकः - *(स्वशिरः दर्शयन् - स्वगतम्)* सत्यम्..., एषा एका एव न्यूनता !

देवदत्तः - यदि भवन्तः मम शिरसि अपि चन्दनकस्य शिरसि इव यथा केशाः उत्पद्येरन् तथा करिष्यन्ति तर्हि अहं भवतः भगवन्तं मन्ये ।

वैद्यराजः - भवतु वत्स... । तत्तु कियन्मात्रम् ! परन्तु....

देवदत्तः - परन्तु किं श्रीमन् ?

देवदत्तः - तत्तु अधिकं व्ययसाध्यम् ।

चन्दनकः - भवतु नाम... । तदहं दातुं सज्जः अस्मि । वदन्तु... किं मूल्यं भवति तस्य ... ?

*(वैद्यराजः चन्दनकस्य मुखं पश्यति ।)*

चन्दनकः - प्रतिसप्ताहं शतं दीनाराः । मासचतुष्टयं यावत् चिकित्सा कर्तव्या ! वैद्याय प्रतिसप्ताहं शतं दीनाराः भवता दातव्याः ।

देवदत्तः - *(स्वगतम्)* प्रतिसप्ताहं शतं दीनाराः ! आहत्य सहस्राधिकाः दीनाराः ! अस्तु नाम । *(प्रकाशः)* परन्तु ... चिकित्सानन्तरं निश्चयेन मम शिरसि केशाः भविष्यन्ति खलु ?

वैद्यराजः - तद्विषये किमर्थं चिन्ता ? चिकित्सायाः आरम्भानन्तरं द्वितीये सप्ताहे एव शिरसि केशानाम् उत्पत्तिः भविष्यति । तादृशाः केशाः उत्पद्यन्ते, ये भवता जन्मनि एव न दृष्टाः ! गतमासे एव कलिङ्गराजेन अहम् आहूतः आसम् । तस्य पुत्र्याः राजकुमार्याः चिकित्सा मयैव कृता । सा इदानीं नीलवेणी जाता अस्ति । नागवेणी जाता अस्ति ।

देवदत्तः - ममापि तथैव भवेत् ।

वैद्यराजः - *(सविनोदम्)* अनन्तरं प्रतिसप्ताहं मुण्डनं कारयितुं भवता कश्चित् नापितः नियोजनीयः भवेत् । ह... ह... ।

देवदत्तः - तर्हि किमर्थं विलम्बः ? शुभस्य शीघ्रम् । चिकित्सायाः आरम्भः इदानीमेव भवतु ।

चन्दनकः - तथैव भवतु । परं मया तु इदानीं गन्तव्यम् ।

देवदत्तः - तर्हि गन्तुम् अर्हति भवान् ।

चन्दनकः - परन्तु मह्यं भवता न दत्तमेव खलु ?

देवदत्तः - दास्यामि, किञ्चित् तिष्ठतु ।

*(दासः पानीयम् आनयति । देवदत्तः ताभ्यां वितरति । तयोः पानसमये अन्तः गच्छति । तौ दृष्ट्या एव सम्भाषणं कुरुतः । देवदत्तः आगत्य शतस्य दीनाराणां स्यूतं ददाति ।)*

चन्दनकः - प्रत्यर्पणे अकस्मात् विलम्बः भवेत् ... ।

देवदत्तः - भवतु नाम, भवान् मम मित्रं खलु... !

चन्दनकः - तर्हि अहं प्रतिष्ठे । वैद्यमहोदय ! एतस्य उचितां चिकित्सां निर्वर्त्य भवान् मम गृहं प्रति आगच्छतु । तत्रैव भवतः वासव्यवस्थां कल्पयामि ।

वैद्यराजः - तथैव अस्तु । *(साकूतम्)* अहम् एतस्य उचितां चिकित्सां निर्वर्तयामि ।

चन्दनकः - देवदत्तमहोदय, पुनर्मिलामः ।

देवदत्तः - पुनर्मिलामः ।

*(चन्दनकः गच्छति ।)*

देवदत्तः - वैद्यमहोदय, चिकित्सायाः आरम्भः भवतु । अहं सज्जः ।

वैद्यराजः - तथैव अस्तु । आगच्छतु । भवतः शिरसः परीक्षां करोमि । *(देवदत्तः उपविशति । तस्य शिरः परिशीलयन् स्वगतम्)* वस्तुतः शिरसि किमपि नास्ति इव भासते । अस्तु प्रयत्नं कुर्मः । *(प्रकाशः)* पश्यतु, *(मूलं दर्शयन्)* एतदस्ति सिद्धौषधम् । एतत् प्राप्तुं विन्ध्यारण्ये त्रीणि वर्षाणि यावत् मया घोरं तपः आचरितम् । जम्भीररसेन सह एतत् निष्पीड्य शिरसि लेपनीयम् । *(छुरिकां निष्कासयति । देवदत्तः भीतिं नाटयति । जम्भीरं कर्तयति - निष्पीडनं नाटयति, अनन्तरं हस्तेन गृहीत्वा)* ओं, हां, हीं... शम्भो शङ्कर महादेव... ! जय महाकाल... ! *(मन्त्रकथनं नाटयति । शिरसि लेपयति...)*

देवदत्तः - *(अतीव वेदनां नाटयन्)* आ... नष्टं... नष्टं... नष्टं मम शिरः... ।

वैद्यराजः - हुश्... यदि तूष्णीं न उपविशति तर्हि भवान् आजीवनं खल्वाटः एव भविष्यति... ।

देवदत्तः - भवतु... तूष्णीम् उपविशामि... । भगवति... अम्ब... रक्ष मां परमेश्वरि... ! *(वैद्यः लेपनं समापयति ।)*

देवदत्तः - समाप्तं वा ? ... समाप्तं खलु ?

वैद्यराजः - न समाप्तम्, इतोऽपि किञ्चिदस्ति ।

देवदत्तः - इतोऽपि अस्ति वा ? एतावता एव मम प्राणाः गताः ।

वैद्यराजः - चिन्ता मास्तु । यथा ते न गच्छेयुः तथा अहं व्यवस्थां करोमि । तिष्ठतु । *(पुनः लेपयति । समाप्य, हस्तमार्जनं कृत्वा)* भवतु, मदीयं धनं दीयताम् ।

देवदत्तः - ददामि वैद्यमहोदय... ! परन्तु, इदानीमेव शतं दीनाराः अपि दातव्याः वा ?

वैद्यराजः - अथ किम् ? यदि केशाः अपेक्षिताः तर्हि सर्वमपि दातव्यमेव । यदि एकस्य दीनारस्य न्यूनतां करोति तर्हि अपि केशाः न वर्धन्ते... । जागरूको भव ।

देवदत्तः - अस्तु वैद्यमहोदय, सर्वं ददामि । स्वीकरोतु । *(धनस्यूतं ददाति)*

वैद्यराजः - *(गणयति)* ह... ह... *(हसन् गच्छति ।)*

*(पुनः द्विवारं लेपनं, धनदानं च प्रदर्शनीयम् ।)*

## - द्वितीयं दृश्यम् -

*(देवदत्तः आसन्दे उपविष्टः, सेवकः भूमिमार्जनं कुर्वन् अस्ति ।)*

देवदत्तः - अरे दास... अत्र आगच्छतु ... ।

दासः - *(समीपम् आगच्छति ।)*

देवदत्तः - दास, पश्यतु... *(स्वशिरः दर्शयन्)* अत्र केशाः उत्पन्नाः वा ?

दासः - नैव ।

देवदत्तः - अत्र ?

दासः - नैव ।

देवदत्तः - अत्र ?

दासः - नैव ।

देवदत्तः - अरे दास, असत्यं वदति भवान् । अत्र किमपि अस्ति इव भासते ।

दासः - भोः देव, भवतां चिकित्सायाः कति दिनानि अतीतानि इदानीम् ?

देवदत्तः - त्रयः मासाः अतीताः ।

दासः - त्रयः मासाः... ! कति दीनाराः व्ययिताः ?

देवदत्तः - केचन व्ययिताः ।

दासः - परन्तु अद्यापि एकोऽपि केशः न दृश्यते !

देवदत्तः - सत्यं किल ? किमर्थं स्यात् दास ?

दासः - अन्यत् किं, सः वैद्यः एव नास्ति । स तु कश्चन वञ्चकः स्यात् । भवतः हस्ततः धनं स्वीकर्तुं तथा कृतवान् स्यात् ।

देवदत्तः - आं... सत्यं वा ?

दासः - मम तु तथैव भासते देव । *(द्वारे शब्दः)* अरे, सः एव आगतवान् इति मन्ये । *(धावति)*

वैद्यराजः - *(प्रविश्य)* देवदत्तमहोदय, चिकित्सायाः आरम्भं कुर्मः ।

देवदत्तः - अस्तु, आरम्भं कुर्मः ।

वैद्यराजः - *(समीपं गत्वा आरम्भं करोति)*

देवदत्तः - वैद्यमहोदय..., अस्माकं चिकित्सायाः कति दिनानि अतीतानि इदानीम् ?

वैद्यराजः - त्रयः मासाः अतीताः ।

देवदत्तः - मया अद्यपर्यन्तं कति दीनाराः दत्ताः ?

वैद्यराजः - ह. ह... केचन दत्ताः । तत् किमर्थम् इदानीम् ?

देवदत्तः - *(साक्षेपम्)* मम शिरसि कति केशाः उत्पन्नाः सन्ति ?

वैद्यराजः - उत्पद्यन्ते... उत्पद्यन्ते... । त्वरां मा करोतु भवान् ।

देवदत्तः - *(सकोपम्)* पूर्वं किमुक्तं भवता ? पक्षाभ्यन्तरे एव केशाः उत्पद्यन्ते इति । परन्तु मासत्रयम् अतीतम् । एकोऽपि केशः न दृश्यते... । किं कारणम् ? वदतु भोः... ।

वैद्यराजः - तत्र भवान् एव कारणं स्यात् । भवता प्रतिसप्ताहं सम्यक् शतं दीनाराः न दत्ताः; नवनवतिः दीनाराः एव दत्ताः इति मन्ये । अतः औषधस्य प्रभावः न जातः ।

देवदत्तः - अरे मूर्ख ! मत्तः सहस्राधिकान् दीनारान् स्वीकृत्य इदानीं मम एव दोषः इति कथयति वा ? कुत्र सन्ति मया दत्ताः दीनाराः ? तान् प्रत्यर्प्य एव इतः गन्तुम् अर्हति भवान् ।

वैद्यराजः - *(भयेन)* किं, दीनाराः प्रत्यर्पणीयाः वा ?.... भवतु .... भवतु.... इदानीम् एव गत्वा आनेष्यामि । *(वस्तूनि सर्वाणि स्वीकृत्य धावितुं प्रयतते ।)*

देवदत्तः - अरे, कुत्र धावति चोर... ? *(गत्वा शिरः गृह्णाति । तस्य उष्णीषं पतति । परस्परं वीक्षणम् । पतितम् उष्णीषं गृहीत्वा सः धावति, धावन्तम् उद्दिश्य...)* अरे... भवान् अपि ... ?

वैद्यराजः - आम् । अहम् अपि खल्वाटः एव !

देवदत्तः - भोः खल्वाट ! मम औषधं दत्त्वा एव गच्छतु भोः... ।

वैद्यराजः - अरे मूर्ख ! यदि एतस्य औषधम् अहं ज्ञातवान् स्यां तर्हि मम शिरः किमर्थम् एवम् अभविष्यत् ? अतः स्मरतु, आजीवनम् अहमपि खल्वाटः, भवानपि खल्वाटः । परन्तु मम शिरसि किञ्चित् बुद्धिः अस्ति । भवतः शिरसि तदपि नास्ति । सः एव भेदः । ह... ह... ह... *(धावति ।)*

देवदत्तः - अये... भगवति.... !! *(शिरस्ताडनम्)*

*(पटाक्षेपः)*

## - प्रथमं दृश्यम् -

*(कविः विश्वनाथः स्वगृहे आसन्दे उपविश्य शाकुन्तलं नाटकं पठन् अस्ति । उत्पीठिकायाः उपरि कानिचन पुस्तकानि, लेखनसाधनानि च दृश्यन्ते ।)*

कविः - शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।।

*(सश्लाघम्)* आह् ! कीदृशः उदात्तः भावः ! यदि सर्वाः गृहिण्यः काश्यपोपदेशमिमम् अनुसरन्ति तर्हि अस्माकं देशे समस्याः एव न भवेयुः । *(सनिःश्वासम्)* किन्तु इदानीन्तनगृहिण्यस्तु ......

शालिनी - *(प्रविश्य)* किं भोः, कविवर्यस्य काव्याभ्यासः इदानीमपि न समाप्तः वा ? *(निःश्वस्य)* यदि भवान् आदिनम् एवं काव्यरसमेव आस्वादयन् तिष्ठति तर्हि अस्माभिः उपवासव्रतम् आचरणीयं भवेत् ।

कविः - भवतु, का हानिः ?

शालिनी - *(साधिक्षेपगर्भम्)* का हानिः.... ! भवतः कापि हानिः न स्यात् । यतः भवान् तु कल्पनालोके एव विहरन् तिष्ठति ! हानिस्तु अस्माकं, ये वयं वास्तविके प्रपञ्चे जीवामः ।

कविः - मा कुप्यतु भवती । *(नाटकीयशैल्या)* आदिशतु तत्र भवती, को नियोगः अनुष्ठीयताम् इति ।

शालिनी - आहहह.... नियोगः अनुष्ठीयते ! *(साधिक्षेपगर्भम्)* अहं न जानामि वा ? एतावता मदीयाः बहवो नियोगाः भवता अनुष्ठिताः ननु !

कविः - *(नाटकीयशैल्या)* प्रसीद परमेश्वरि ! कृपासागरि ! अद्य तथा न क्रियते । किन्तु भवत्याः नियोगः अवश्यं सश्रद्धम् अनुष्ठीयते । आदिशतु तत्र भवती ।

शालिनी - *(साकूतं तया एव शैल्या)* यद्येवं तर्हि अद्य पाककार्यं भवता एव क्रियताम् !

कविः - *(ससम्भ्रमम्)* पाकः... ! मया ... ?

शालिनी - किमर्थं सम्भ्रमः.. ? इदानीमेव भवता उक्तं ननु 'नियोगः सश्रद्धम् अनुष्ठीयते' इति ।

कविः - *(हसन्)* न... न..., न कोऽपि सम्भ्रमः । परन्तु... पाकः... मया पाकः...

शालिनी - मास्तु, मास्तु । पाकम् अहमेव करोमि ।

कविः - *(सत्वरम्)* रे... रे... किमर्थम्... ? अहं तु पाकं कर्तुं सज्जः एव अस्मि ।

शालिनी - *(सहासम्)* भवान् सज्जः स्यात् । पाकं कुर्यात् अपि । परन्तु अनन्तरं तत् भोक्तुम् अत्र कोऽपि सज्जः न भवति । अतः मास्तु इत्युक्तम् ।

कविः - भवती मम पाककौशलं न जानाति, अतः एवं वदति ! *(निःश्वस्य)* भवतु, तर्हि किमन्यत् करवाणि इदानीम् ?

शालिनी - आपणं गत्वा पाकार्थम् अपेक्षितानि वस्तूनि आनयतु ।

कविः - वस्तूनि... ? कानि वस्तूनि... ? किमर्थम् .... ?

शालिनी - अहो ! किमिति वर्णयामि भवतः स्मरणशक्तिम् ! 'अद्य मम सखी भाग्यनगरात् आगमिष्यति । तदर्थं विशेषपाकः करणीयः' इति ह्यः निश्चितमपि विस्मृतं वा.. ?

कविः - न... न... स्मरामि... सम्यक् स्मरामि । भवती स्मरति वा न वा इति ज्ञातुं तथा उक्तवान् अहम् । तावदेव ।

शालिनी - (*निःश्वस्य)* हूं... ! अहं न जानामि वा भवतः स्मरणशक्तिम् !

भवतु, इदानीं गम्यताम् ।

कविः - अहं प्रस्थितः एव । *(द्वित्राणि पदानि गच्छति ।)*

शालिनी - भोः... भोः..., गमनम् इत्युक्ते एवमेव गमनं वा ? वस्तूनि आनेतुं स्यूतं गृहीत्वा गच्छतु ।

कविः - ओह्... क्षम्यताम्... विस्मृतम्.. ! *(स्मृत्वा)* न... न..., न विस्मृतम् । अहं भवतीं प्रष्टुम् उद्युक्तः आसम् । तावता भवत्या एव उक्तम् ।

शालिनी - अस्तु भोः, तथैव अस्तु । हू *(स्यूतं दत्त्वा, निःश्वस्य)* शृणोतु, गत्वा शीघ्रम् आगन्तव्यम् ।

कविः - अवश्यम् आगमिष्यामि । *(किञ्चित् दूरं गत्वा - स्मृत्वा)* आ.... शालिनि ! यदा कश्चित् गृहात् प्रतिष्ठते तदा तस्य आपृच्छनसमये कथं वाक्यप्रयोगः करणीयः इति विषये कालिदासस्य नाटकानि परिशीलनीयानि । *(सश्लाघम्)* कथं वदति सः - 'शिवास्ते पन्थानः सन्तु !' आह्... कीदृशं वाक्यम् ! शालिनि ! भवती अपि तत् वाक्यं वदतु ।

शालिनी - भोः कविसार्वभौम ! अभिज्ञानशाकुन्तलं भवता एव पाठितं सम्यक् स्मरामि अहम् । यदि शकुन्तला इव भवानपि पतिगृहं गच्छति तर्हि अहमपि तथैव वदेयम् । *(स्वगतम्)* गमनं तु आपणं प्रति । तदर्थम् आपृच्छनवचनमपि अपेक्षितम् !

कविः - सकृत् उच्यतां भोः ...

शालिनी - वदामि, भवान् गच्छतु .... *(सरोषम्)* शिवास्ते पन्थानः सन्तु ।

कविः - साधु, साधु ! इदानीं गच्छामि । *(द्वित्राणि पदानि गत्वा)* अरे, शालिनि.. ! धनमेव न दत्तवती किल भवती ।

शालिनी - ओह्... विस्मृतम् । तिष्ठतु, धनम् आनयामि ।

कविः - *(ससन्तोषम्)* तर्हि विस्मरणं न केवलं मम दोषः । भवत्याः अपि । ह.. ह.. ह.. *(हासः)* भवती यावत् धनम् आनयति तावत् पर्यन्तं पुनरपि श्लोकमेनं पठामि -

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुविप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।।

*(टक्– टक् - इति द्वारे शब्दः)*

शालिनी - तिष्ठतु... आगच्छामि... ।

*(द्वारोद्घाटनस्य शब्दः)* ओह्.. पत्राणि वा ?

कविः - पत्राणि आगतानि किम् ? मम पत्राणि स्युः किल, ददातु ।

शालिनी - सन्ति, सन्ति, त्रीणि पत्राणि सन्ति ।

कविः - त्रीणि पत्राणि ! कैः लिखितानि स्युः.... ?

शालिनी - पत्रिकासम्पादकैः लिखितानि विषादसूचकपत्राणि स्युः । स्वीकरोतु, पठतु भवानेव । *(ददाति । विश्वनाथः स्वीकृत्य एकं पत्रम् उद्घाटयति ।)*

कविः - *(उच्चैः पठति)* विश्वनाथमहोदयाय, सादरं वन्दनानि । अस्माकं पत्रिकां प्रति भवता प्रेषितः लेखः प्राप्तः अस्ति । परन्तु तस्य लेखस्य प्रकाशनम् अस्माकं पत्रिकायाम् न शक्यते इति सविषादं सूच्यते । *(कोपेन)* हू... मूर्खाः.... !

*(छित्त्वा क्षिपति । द्वितीयं पत्रम् उद्घाटयति, पठति ।)*

भवता प्रेषिता कथा प्राप्ता । परन्तु तां प्रकाशयितुं न शक्यते इति वयं सविषादं सूचयामः ... ।

*(तदपि छिनत्ति, क्षिपति च)*

*(सकोपम्)* मम लेखनस्य वैशिष्ट्यं किमेते मूर्खाः ज्ञातुं प्रभवन्ति ! हू... भवतु... 'उत्पत्स्यते च मम कोऽपि समानधर्मा कालोह्ययं निरवधिर्विपुला च पृथ्वी' ... ! तदा एते ज्ञास्यन्ति मम कवित्वम् !

शालिनी - (सहासम्) भोः कविकुलभूषण ! भवता जीवने प्राप्तं कतमं विषादपत्रमिदं स्यात् ।

कविः - *(कोपेन)* आह् दुष्टे ! भवती अपि माम् उपहसति ... !! उपहसतु नाम !

शालिनी - *(दुःखेन)* उपहासं विना किमन्यत् करवाणि ! *(रोदिति)* 'कञ्चित् समीचीनम् उद्योगं प्रविश्य धनं सम्पादयतु, सुखेन जीवामः' इत्युक्तं चेत् भवान् तत् नाङ्गीकरोति । 'कवित्वेनैव जीवामि' इति कथयति । भवतः काव्यं तु न कोऽपि प्रकाशयति । प्रतिदिनं पत्रिकासम्पादकानां विषादसूचकपत्राणि प्रवाहरूपेण अत्र आगच्छन्ति । तथापि भवतः कवित्वव्यामोहः ! *(निःश्वस्य)* एतादृशं भवन्तं परिणेतुम् अङ्गीकृतवत्याः मम बुद्धिः नास्ति... । किं करवाणि... !

कविः - *(सानुनयम्)* शालिनि... ! निराशा मा भवतु ... । अस्माकं सुदिनानि सन्निहितानि सन्ति ... यतः देशस्य प्रसिद्धा पत्रिका 'सागरिका' अस्ति किल, तया काचित् कथास्पर्धा आयोजिता अस्ति । प्रथमं पारितोषिकं दशसहस्रं रूप्यकाणि ! तदर्थं मम अत्युत्तमा कथा 'शिलाबालिका' प्रेषिता अस्ति ।

शालिनी - किन्तु महाभाग, स्पर्धायां न केवलं भवान् एकः एव भागं वहति, अपि तु सहस्राधिकाः वहन्ति । तन्मध्ये भवतः का गणना ?

कविः - शालिनि ! ... मास्तु ..., भवती पुनः पुनः माम् उपहसन्ती अस्ति । एतदहं न सहे !

शालिनी - *(सकोपम्)* तर्हि किं श्लाघनं करवाणि...., उत पूजाम्... ?

कविः - *(सरोषम्)* शालिनि ! पर्याप्तम् । इतोऽपि अधिकं कथनं नापेक्षितम् । भवती मां धनार्जने असमर्थं मन्यते ननु... ! भवतु... ! तथैव मन्यताम् । *(गन्तुम् उद्युक्तः)*

शालिनी - *(ससम्भ्रमम्)* अरे, कुत्र गच्छति भवान् ?

कविः - कुत्रापि.... वाराणसीं गच्छेयं, नैमिषं वा ... ! हूँ .... पत्युः सामर्थ्यविषये यस्याः विश्वासः नास्ति तया सह वासापेक्षया अरण्ये वासः वरम् ! तत्रैव गच्छामि । *(कोपेन गच्छति)*

शालिनी - *(स्वगतम्)* अरे... गतवान् एव खलु मम आर्यपुत्रः ! मम वचनेन सः तावान् कुपितः भवेदिति मम कल्पना एव न आसीत् । *(विचिन्त्य)* किमिदानीं करवाणि ?

*(किंकर्तव्यतामूढा सती आसन्दे उपविशति । दुःखम् अभिनयति । किञ्चित् कालानन्तरं गृहीतयानपेटिका सावित्री, नलिनी च प्रविशतः ।)*

सावित्री - *(प्रविशन्ती स्वगतम्)* किमिदम्... ? गृहे कोऽपि अस्ति वा नास्ति वा ? कस्यापि ध्वनिरेव न श्रूयते । *(दृष्ट्वा)* ओह्... मम सखी तत्र आसन्दे उपविष्टा अस्ति । आलिखिता महाश्वेता इव दृश्यते । किं कुर्वती स्यात्... ? *(समीपं गत्वा)* शालिनि... ! शालिनि... !

शालिनी - अरे, कदा आगतवती भवती ? अहं न दृष्टवती एव ।

सावित्री - इदानीमेव आगता ।

शालिनी - पुत्री कुत्र ... ?

सावित्री - अत्रैव अस्ति किल ! सगम्भीरम् उपविष्टां भवतीं दृष्ट्वा भीत्या सा समीपं न आगतवती एव । नलिनि ! एतां न नमस्करोति वा ?

नलिनी - नमस्ते भगिनि !

शालिनी - नमस्ते नलिनि ! आगच्छतु । *(प्च्.. चुम्बति)* कियत् दीर्घा जाता अस्ति भवती इदानीम् ... ! भवतु... आ.. सावित्रि... अत्र उपविशतु । *(उपवेशयति)* इदानीं वदतु । कथम् आसीत् प्रयाणम्... ?

सावित्री - सर्वं सुखकरम् आसीत् । तत् भवतु सखि ! भवत्याः आर्यपुत्रः कुत्र ... ? न दृश्यते एव ।

शालिनी - *(मौनम्)*

सावित्री - किमर्थं मौनम् आस्थिता ? किं सञ्जातम् ?

शालिनी - *(मौनम् )*

सावित्री - *(सानुनयम्)* किं सखि, मां न वदति वा ?

शालिनी - न किमपि । सः अत्रैव बहिर्गतः ।

सावित्री - किमर्थम्... ?

शालिनी - एवमेव.... *(अपह्नवं कर्तुमिच्छति ।)*

सावित्री - नैव, किमपि कारणं स्यादेव । मां न वदति वा ?

शालिनी - *(निःश्वस्य)* केनापि कारणेन सः मयि कुपितः अस्ति । अतः बहिः गतवान् ।

सावित्री - एतावदेव वा... ? *(हसति)* सखि ! कुटुम्बजीवने एतत्तु सामान्यम् ।

शालिनी - परन्तु अद्य यत् प्रवृत्तं तत्तु किञ्चित् विशिष्टमेव । यतः विवाहानन्तरं तेन सह यापितेषु एतावत्सु दिनेषु सः कदापि एवं न कुपितः ।

सावित्री - किमर्थं तावान् कुपितः सः... ? कलहः प्रवृत्तो वा ?

शालिनी - किञ्चिदिव... ।

सावित्री - किं मूलं कलहस्य... ?

शालिनी - न किमपि । स तु आत्मानं कविसार्वभौमं मन्यते । काव्यरचनया एव जीवननिर्वहणं करोमि इति कथयति । परन्तु अस्मिन् काले तत्सर्वं कथं शक्यम्... ? अतः मया तस्य काव्यविषये अधिक्षेपः कृतः । सः कुपितः । बहिः गतवानेव ।

सावित्री - ज्ञातं सखि ! सर्वं ज्ञातम् । *(निःश्वस्य)* कवीनां प्रथमं दौर्बल्यम् इदमेव । स्वरचितं काव्यं सर्वश्रेष्ठमित्येव सर्वेषामपि कवीनाम् अभिप्रायः । अन्ये यदि तद्विषये अधिक्षिपन्ति तर्हि ते न सहन्ते एव । एषः विषयः भवत्या ज्ञातव्यः आसीत् ।

शालिनी - तस्य काव्यविषये मम आदरः अस्तीति भवती जानाति एव । यतः, तस्य काव्यप्रतिभया आकृष्टा एव खलु अहं तं परिणीतवती ।

सावित्री - तर्हि 'अपराधं क्षाम्यतु' इति प्रार्थनां करोतु । तस्य कोपोपशमनं भवति ।

शालिनी - तत्तु सत्यम् । क्षमां प्रार्थयितुमपि अहं सज्जा अस्मि । परन्तु सः कुत्र गतवान् इत्येव न ज्ञातम् । *(कातर्येण)* सखि ! यदि सः न प्रत्यागच्छेत् तर्हि किं करवाणि ? *(रोदिति)*

सावित्री - कुत्र गच्छति भोः ... ! बुभुक्षायां सञ्जातायां पुनरागच्छत्येव । अहं सम्यक् जानामि पुरुषाणां कोपम् ! ते कदापि वयमिव दीर्घं न कुप्यन्ति ।

शालिनी - *(साशङ्कम्)* अगतश्चेदपि सः मया सह सम्भाषणमेव न कुर्यात् । अथवा... तत् दूरे तिष्ठतु, गृहमागताम् अतिथिं भवतीमपि सः अनादरेण पश्येत् ।

सावित्री - तद्विषये चिन्तां मा करोतु भवती । कविसार्वभौमस्य कोपोपशमनस्य समीचीनम् उपायम् अहं जानामि ।

शालिनी - *(औत्सुक्येन)* कः उपायः... ? वदतु भोः ।

सावित्री - वदामि । यदि एवं क्रियते तर्हि सः पुनः कदापि न कुप्यति एव । तदर्थम् इदानीम् अहं यत् वदामि तथैव अस्माभिः अनुष्ठातव्यम् । सज्जा भवतु ।

शालिनी - परन्तु सखि ! यदि सः भवत्या सह सम्भाषणमेव न करोति तर्हि किं कर्तव्यम्... ?

सावित्री - यथा सः स्वयमेव मया सह सम्भाषणं कुर्यात् तथा करोमि, पश्यतु भवती ।

शालिनी - यत्किमपि करोतु । परन्तु तस्य कोपोपशमनं भवेत् । तावदेव ।

सावित्री - अवश्यं तथैव कुर्मः । भवती निश्चिन्ता भवतु ।

शालिनी - तथैव अस्तु ।

## - द्वितीयं दृश्यम् -

*(सायङ्कालसमयः । सर्वत्र अटित्वा श्रान्तः कविः गृहं प्रविशति ।*
*सावित्री पुत्रीं गीतं पाठयन्ती अस्ति ।)*

सावित्री - नलिनि ! गायतु...

काचिन्माता शिशुमुन्नीय...

नलिनी - काचिन्माता शिशुमुन्नीय...

सावित्री - सायं भक्ष्यं भोजयति ।

नलिनी - सायं भक्ष्यं भोजयति ।

सावित्री - शिशुरपि भक्ष्यं दूरीकुर्वन्...

नलिनी - शिशुरपि भक्ष्यं दूरीकुर्वन्...

सावित्री - चित्रैः प्रश्नैः पीडयति ।।

नलिनी - चित्रैः प्रश्नैः पीडयति ।।

सावित्री - बालो रोदिति हे अम्ब !

नलिनी - बालो रोदिति हे अम्ब !

सावित्री - आनय त्वम् इह शशिबिम्बम् ।

नलिनी - आनय त्वम् इह शशिबिम्बम् ।

सावित्री - निधाय मामककरमध्ये...

नलिनी - निधाय मामककरमध्ये...

सावित्री - नन्दामीन्दोः सान्निध्ये ।।

नलिनी - नन्दामीन्दोः सान्निध्ये ।।

सावित्री - *(तेनैव क्रमेण पाठयति ।)* चरति विहायसि मेघः कुतः
कस्मात्तम् इह नानयसि ?
श्रान्तौ सत्यां घर्मे अहनि
तदुपरि स्वापं करवाणि ।।

कविः - *(प्रविशन्)* अरे, किमिदं विचित्रम् ! मया लिखितं गीतं गीयमानम् अस्ति ! का गायन्ती स्यात्... ?

नलिनी - *(गायन्ती)* बालो रोदिति हे अम्ब !
आनय त्वम् इह शशिबिम्बम् ।
निधाय मामककरमध्ये
नन्दामीन्दोः सान्निध्ये ।।

कविः - *(सश्लाघम्)* आहह.... मम कर्णयोः विश्वसितुमेव न शक्नोमि । मया लिखितं गीतम् एतावदुत्तमम् अस्तीति अद्यैव ज्ञातवान् ! *(समीपं गत्वा नलिनीम् उद्दिश्य)* आ... बाले, भवत्याः नाम किम् ?

नलिनी - मम नाम नलिनी ।

कविः - नलिनि ! भवती बहु सम्यक् गायति ।

सावित्री - श्रीमन्, तस्याः गानं कथमपि भवतु नाम, एतस्य गीतस्य साहित्यं तावत् उत्तमम् अस्ति । अतः श्रवणरमणीयमस्ति ।

कविः - *(सगर्वम्)* आ... महाशये, इदं पद्यं केन विरचितम् इति भवती जानाति किम् ?

सावित्री - नैव महाशय ! गतमासे कुत्रचित् इदं गीतं मया श्रुतम् । एतेन गीतेन आकृष्टा अहम् अनुक्षणं गीतं विलिख्य मम सङ्ग्रहे स्थापितवती । एतादृशरमणीयस्य गीतस्य लेखनार्थं लेखकाय अभिनन्दनपत्रं लेखनीयम् इति अनेकवारं चिन्तितवती । परन्तु सः लेखकः कः ?, कुत्र निवसति, तस्य पत्रसङ्केतः कः - इत्यादिकं किमपि न ज्ञातम् ।

कविः - *(ससन्तोषम्)* ह... ह... क्षम्यताम् । अहं मम परिचयं वक्तुमेव विस्मृतवान् । अहं कविः विश्वनाथः । एतत् पद्यं मया एव लिखितम् ।

सावित्री - *(आश्चर्येण)* सत्यं वा... ?

कविः - कः संशयः ? *(विचिन्त्य)* अथवा... तिष्ठतु..., दर्शयामि... *(गत्वा पुस्तकम् आनयति, उद्घाटयति, दर्शयति च)* पश्यतु, अत्र अस्ति इदं पद्यम् । मया गतवर्षे लिखितमिदम् ।

सावित्री - श्रीमन्, एतस्य पद्यस्य लेखनविचारः कथम् उत्पन्नः ?

कविः - वदामि... उपविशतु भवती । *(सावित्री उपविशति ।)* आ... कस्मिंश्चित् दिने सायङ्कालसमये अहं विहारार्थं गतवान् आसम् । उद्याने कस्यचित् वृक्षस्य अधः उपविश्य प्रकृतिसौन्दर्यम् आस्वादयन् आसम् । तदा तत्पुरतः विद्यमानात् गृहात् काचित् माता बहिः आगतवती । शिशुम् उन्नीय चन्द्रं प्रदर्शयन्ती सा तं भोजयितुम् आरब्धवती । तद्-दर्शनेन मम कविहृदयं समुल्लसितम् । 'शोकः श्लोकत्वमागतः' इतिवत् पद्यमिदं मम मुखात् स्वयमेव

बहिरागतम् ...

बालो रोदिति हे अम्ब ! आनय त्वम् इह शशिबिम्बम् ।
निधाय मामककरमध्ये नन्दामीन्दोः सान्निध्ये ।।

सावित्री - अतिसुन्दरम् ! श्रीमन् ! किमहं भवता लिखितानि अन्यानि पद्यानि द्रष्टुं शक्नोमि ?

कविः - किमर्थं न..., सर्वं प्रदर्शयामि । एतत् पुस्तकं पश्यतु । अत्र शताधिकानि पद्यानि सन्ति ।

सावित्री - *(स्वीकृत्य पृष्ठपरिवर्तनं करोति ।)* अतिसुन्दरम् । एकस्य अपेक्षया अन्यत् इतोऽपि सुन्दरम् अस्ति । कविकल्पनायाः विलासं पामराः वयं कथं ज्ञातुं प्रभवामः । भवादृशस्य कविवरस्य परिचयात् अहम् आत्मानं धन्यं मन्ये ।

कविः - *(हसन्)* ह.. ह.. ह... *(स्मृत्वा)* ओह्... वार्तालापे मग्नः अहं शिष्टाचारमेव विस्मृतवान् । किञ्चित् तिष्ठतु..., शालिनि... शालिनि... !

शालिनी - *(प्रविश्य)* ओ....

कविः - अत्र आगच्छतु । *(शालिनी समीपम् आगच्छति)* आ... शालिनि... ! एषा मम अभिमानिनी । तन्नाम मम पद्यस्य अभिमानिनी । *(सावित्रीम् उद्दिश्य)* भवत्याः नाम... ?

सावित्री - सावित्री इति ।

कविः - *(शालिनीम् उद्दिश्य)* आ... सावित्री इति एतस्याः नाम । एषा बाला एतस्याः पुत्री नलिनी । एषा मम पद्यं बहु सम्यक् गायति । *(सावित्रीम् उद्दिश्य)* एषा मम पत्नी शालिनी । मम काव्यरचनायाः एषा एव प्रेरणादात्री ।

शालिनी - एषा एव मम प्रियसखी । अद्य भाग्यनगरात् अत्र आगच्छति इति

मया उक्तमासीत् किल, तत् एतस्याः विषये एव !

कविः - ओ, सत्यं वा... ? बहु समीचीनं जातम् ।

सावित्री - परन्तु सखि ! मम अतीव प्रियतमस्य पद्यस्य लेखकः भवत्याः आर्यपुत्रः इति इदानीमेव ज्ञातम् । *(साकूतम्)* धन्या खलु भवती, या ईदृशं प्रतिभाशालिनं पतिं प्राप्तवती !

कविः - *(हसन्)* सत्यं वक्तव्यं चेत् मम प्रतिभायाः मूलम् एषा एव । सत्यं किल शालिनि !

शालिनी - मां मा उपहसतु आर्यपुत्र !

कविः - उपहासः कः तत्र ? गृहे एतादृशं निर्मलं परिवेषम् एषा कल्पयतीति कारणतः एव अहं सर्वं लेखितुं शक्नोमि । अतः मम यशसः एषा एव मूलकारणम् ।

सावित्री - दम्पत्योः मध्ये एतादृशी आत्मीयता, सौहार्दश्च अस्ति इति कारणतः एव भवान् एतादृशं निर्मलं काव्यं रचयति ।

कविः - तत्तु सत्यम् । वस्तुतः वक्तव्यं चेत् विवाहानन्तरम् एतावत्पर्यन्तम् आवाभ्यां, कदापि, एकवारमपि कलहः न कृतः । भवती विश्वसिति किम् ? सत्यं किल शालिनि !

शालिनी - सत्यम्, सत्यम् ।

सावित्री - भवतु... एतादृशं कविवर्यं तस्य गार्हस्थ्यजीवनं च दृष्टवत्याः मम जीवनं सार्थकम् । भवतोः सौहार्दः सुखं च इतोऽपि अभिवर्धताम् । आ... सखि ! अहं प्रतिष्ठे ।

कविः - कुत्र गच्छति भवती ? द्वित्राणि दिनानि अत्रैव स्थित्वा अस्माकम् आतिथ्यं स्वीकृत्य अनन्तरमेव गन्तुमर्हति ।

शालिनी - सत्यं सखि ! द्वित्राणि दिनानि अत्रैव स्थातव्यम् ।

कविः - अहं मम पद्यानि सर्वाणि श्रावयामि । तेषां लेखनप्रसाङ्गान् अपि विवृणोमि... !

सावित्री - *(साकूतम्)* सत्यं वा... ? भवतु... तर्हि अत्रैव तिष्ठामि ।

नलिनी - अम्ब ! गृहं प्रति कदा गच्छाम ?

कविः - अये नलिनि ! इदमपि भवत्याः गृहमेव । मात्रा सह कानिचित् दिनानि अत्रैव तिष्ठतु । अहं भवतीम् उत्तमानि गीतानि पाठयामि ।

*(द्वारे शब्दः)*

कोऽपि आगतः इति मन्ये । शालिनि ! भवती पश्यतु ।

शालिनी - *(गत्वा, आगत्य)* तन्त्रीवार्ता अस्ति... भवते... !

कविः - मम... तन्त्रीवार्ता... ! का वार्ता स्यात्... ? *(स्वीकृत्य उद्घाटयति, उच्चैः पठति)* ''कथास्पर्धायां भवतः शिलाबालिकानाम्न्या कथया प्रथमं पारितोषिकं प्राप्तमस्ति । अभिनन्दानि ।'' *(ससन्तोषम्)* शालिनि ! पश्यतु, पश्यतु.... कथास्पर्धायां मम कथया प्रथमं पारितोषिकं लब्धमस्ति । दशसहस्त्ररूप्यकाणां पारितोषिकं प्राप्तमस्ति !

शालिनी - सत्यं वा ?

कविः - कः संशयः ? भवती एव पठतु तन्त्रीवार्ताम् ।

सावित्री - तर्हि श्रीमन् ! पारितोषिकप्राप्त्यर्थं मम अभिनन्दनानि ।

कविः - धन्यवादाः । आ... शालिनि ! अतीवसन्तोषदायिनी वार्ता आगता अस्ति । अतः अद्य विशिष्टं पाकं करोतु । भगिनि, अस्माकं सन्तोषे भवत्या अपि भागः स्वीकर्तव्यः ।

सावित्री - अवश्यं तथैव अस्तु ।

शालिनी - पाकं तु अहम् अवश्यं करोमि । भवान् यदि आपणं गत्वा कानिचित्

वस्तूनि आनयति तर्हि.... ।

कविः - अवश्यम् आनयामि । भवत्या उक्तं कार्यं यदा कदापि मया निराकृतं वा ? आगमनसमये किञ्चित् मधुरमपि आनयामि । भगिनि ! भवती विश्रान्तिसुखम् अनुभवतु । अहमिदानीमेव आपणं गत्वा आगच्छामि । शालिनि ! अहमागच्छामि । *(ससन्तोषम्)* बालो रोदिति हे अम्ब.... *(इति गायन् गच्छति । तस्य गमनानन्तरं द्वे अपि उच्चैः हस्तः)*

सावित्री - दृष्टं वा सखि ! कविसार्वभौमस्य कोपः कुत्र गतः इति । इतःपरं कदापि तस्य काव्यविषये अधिक्षेपं मा करोतु ।

शालिनी - उपायस्तु ज्ञातः सखि ! भवत्याः उपायः अत्यन्तं सुन्दरः अस्ति । अस्माकं सौभाग्यवशात् इदानीमेव तेन पारितोषिकं प्राप्तमिति तन्त्रीवार्तापि आगता ।

सावित्री - तत्तु काकतालीयन्यायेन प्रवृत्तम् । अथवा, कथमपि भवतु नाम, तस्य कोपोपशमनं सञ्जातं ननु !

शालिनी - सत्यं सखि ! समये आगतवत्या भवत्या बहु उपकृतम् ।

सावित्री - उपकारः कः तत्र ? यत् स्फुरितं तत् कृतवती, तावदेव । भवतु, अस्माकम् उपायं सः यथा न जानीयात् तथा जागरूका भवतु ।

शालिनी - तथैव अस्तु ।

*(पटाक्षेपः)*

# साक्षात्कारः

**पात्राणि –**

आनन्दः

रमेशः

साक्षात्कारकर्तारौ अधिकारिणौ

अधिकारिणी (लीला)

सेवकः

त्रिचतुराः उद्योगाकांक्षिणः

## – प्रथमं दृश्यम् –

*(आनन्दस्य प्रकोष्ठः । आनन्दः २२वर्षीयः निरुद्योगी युवकः । प्रकोष्ठे इतस्ततः प्रसारितानि वस्तूनि वस्त्राणि च दृश्यन्ते । यदा दीपः ज्वलति तदा त्वरया कामपि सञ्चिकां परिशीलयन् आनन्दः दृश्यते । ततः रमेशः प्रविशति ।)*

रमेशः - *(प्रविश्य)* हरिः ओम् !

आनन्दः - हरिः ओम्, रमेश, भवान् वा ? *(एकया अङ्गुल्या नासिकायाः अधोभागम् अपवार्य सम्भाषणं करोति ।)* आगच्छतु, उपविशतु । कुशलं वा ?

रमेशः - आम्, सर्वं कुशलम् । *(आनन्दस्य मुखमेव दृष्ट्वा)* किं भोः, किमर्थं तथा सम्भाषणं करोति ? किम् अभवत् ?

आनन्दः - किमपि न, किमपि न ! आ...रमेश, भवान् काफी पिबति किल ? एकक्षणं तिष्ठतु । *(चुल्लिसमीपं गच्छति । त्वरया काफीसज्जीकरणस्य अभिनयः । हस्तः दग्धः भवति । शर्करा इति मत्वा तत्र लवणं पूरयति । कथमपि सज्जीकृत्य चषकद्वयम् आनयति । रमेशः आसन्दे उपविश्य तत्र विद्यमानां सञ्चिकां पश्यति । तत्र प्रमाणपत्राणि, अङ्कपत्राणि भावचित्रम् इत्यादिकं भवति । )*

आनन्दः - *(काफी आनीय एकं चषकं पार्श्वे स्थापयति, एकं रमेशाय ददाति ।)* स्वीकरोतु भोः ।

रमेशः - *(स्वीकुर्वन्)* धन्यवादः, भवान् अपि स्वीकरोतु भोः ।

आनन्दः - अस्तु, अहम् अनन्तरं स्वीकरोमि ।

*(रमेशः पिबति, अरुचिम् अभिनयति ।)*

आनन्दः - *(युतकं धरन्)* कथम् अस्ति काफी, सम्यक् अस्ति वा ?

रमेशः - *(नेत्रे निमील्य)* आम्, बहु सम्यक् अस्ति । *(पार्श्वे स्थापयति ।)*

आनन्दः - *(युतकं धृत्वा काफी पिबति ।)* आ... अरे! शर्करा इति चिन्तयित्वा काफीमध्ये लवणं योजितवान् । न उक्तवान् एव किल भवान् ? अस्तु... *(घटीं पश्यति ।)* अन्यत् कृत्वा ददामि वा ? *(पुनः घटीं पश्यति ।)*

रमेशः - मास्तु भोः, इदानीं भवान् बहु त्वरायाम् अस्ति, अहं जानामि । तद् भवतु..., *(मुखं पश्यन्)* किं भोः, अद्य कोऽपि विशेषः दृश्यते ।

आनन्दः - कः विशेषः भोः, कुत्र भोः ?

रमेशः - किमर्थम् एवम् अभिनयति ? *(समीपं गत्वा मुखं पश्यति । आनन्दस्य मुखे श्मश्रु न भवति । तत् दृष्ट्वा)* किं भोः, एतत् किम् ? नूतनं fashion वा ?

आनन्दः - नैव भोः, मुखक्षौरसमये अकस्मात् एवं जातम् । अद्य उद्योगसम्बन्धे साक्षात्कारः अस्ति । तत्र गन्तुं सज्जतां कुर्वन् आसम् । तदा एवं सञ्जातम् ।

रमेशः - साक्षात्कारः कुत्र ?

आनन्दः - प्रकाशनगरे ।

रमेशः - कः उद्योगः ?

आनन्दः - एका नारिकेलतैलनिर्माणसंस्था अस्ति । तत्र विक्रयणप्रतिनिधेः उद्योगः ।

रमेशः - ओ, सेल्स् रेप्रसेन्टेटिव् वा ?

आनन्दः - आम् ।

रमेशः - तदर्थं का अर्हता अपेक्षिता ?

आनन्दः - काचित् पदवी, तदपेक्षया अधिकम् आवश्यकम् इत्युक्ते सम्भाषणे अभिनये च कौशलम् ।

रमेशः - तत्र भवान् निपुणः एव, अहम् जानामि ।

आनन्दः - अन्योऽपि अंशः इत्युक्ते तदुद्योगार्थं सुन्दराः दर्शनीयाः पुरुषाः एव अपेक्षिताः ।

रमेशः - भवान् आवेदनपत्रेण सह तेभ्यः भावचित्रं प्रेषितवान् वा ?

आनन्दः - आम्, प्रेषितवान् ।

रमेशः - किं चित्रं प्रेषितवान् ?

आनन्दः - *(सञ्चिकायाम् अन्विष्य)* एतदेव ।

रमेशः - चित्रं तु सुन्दरम् अस्ति । किन्तु...

आनन्दः - किन्तु किम्.... ?

रमेशः - चित्रे भवतः मुखे श्मश्रु अस्ति । अतः चित्रं सुन्दरं दृश्यते । परम् इदानीं तु ....

आनन्दः - इदानीं ... वदतु भोः, कथं दृश्ये अहम्... ?

रमेशः - सत्यं वक्तव्यं चेत् .....

आनन्दः - वदतु भोः, शीघ्रं वदतु...।

रमेशः - श्मश्रुरहितं भवतः मुखं द्रष्टुमेव न शक्यते । भवान् आनन्दः इति न भासते एव । भवतः एतत् श्मश्रुरहितं मुखं पश्यन्ति चेत् ते अङ्गीकुर्वन्ति वा इति मम तु संशयः ।

आनन्दः - सत्यं भोः, ममापि तदारभ्य सा एव चिन्ता । पश्यतु..., (चित्रं दर्शयन्) अहम् अत्र कथम् अस्मि । इदानीं कथम् अस्मि । मम मुखं द्रष्टुं मम एव लज्जा भवति । *(निराशया)* रमेश, अहं साक्षात्कारार्थं न गच्छामि भोः !

रमेशः - किमर्थम् ?

आनन्दः - ते मम मुखम् एवं पश्यन्ति चेत् निश्चयेन उद्योगं न यच्छन्ति । रमेश, वदतु भोः, किं करोमि इदानीम् ?

रमेशः - आ... अहमेकम् उपायं सूचयामि - *(कर्णे वदति)* एवं कुर्मः चेत् कथम् ?

आनन्दः .- परन्तु...तत् सम्यक् भवति वा ? कोऽपि क्लेशः न भवति किल !

रमेशः - नैव भोः, अहम् अस्मि । चिन्ता मास्तु ..। आगच्छतु, गच्छामः ।

*(द्वौ अपि गच्छतः ।)*

## - द्वितीयं दृश्यम् -

*(आपणस्य बहिर्भागः । कृतकं श्मश्रु धृत्वा आनन्दः प्रविशति । तम् अनुसृत्य रमेशः प्रविशति ।)*

रमेशः - पश्यतु, कथमस्ति भवान् इदानीम्... !

आनन्दः - मित्र, भवतः कृपया इदानीं पूर्ववद् एव दृश्ये । बहु धन्यवादः भोः ।

रमेशः - तर्हि शुभं भवतु । अहं गच्छामि । भवान् सायङ्काले मिलति किल ! तदा किम् अभवत् इति वदतु..।

आनन्दः - अस्तु । सायङ्काले मिलामि ।

रमेशः - शृणोतु, मधुरमपि आनेतव्यम्...

आनन्दः - अवश्यम् आनयामि भोः... ।

*(गच्छतः)*

## - तृतीयं दृश्यम् -

*(साक्षात्कारस्य दृश्यम् - प्रकोष्ठस्य पुरतः अनुपङ्क्तिः । तत्र प्रथमः आनन्दः एव । मध्ये मध्ये श्मश्रु स्पृशन् तिष्ठति । सेवकः यदा नाम आह्वयति तदा अन्तः प्रविशति । साक्षात्कारकर्तारः द्वौ पुरुषौ, एका महिला च । सर्वेऽपि मध्यवयस्काः, स्थूलकायाश्च । पुरतः उत्पीठिकायां तैलकूप्यः सन्ति ।)*

आनन्दः - *(अन्तः प्रविशन्)* नमस्कारः !

प्रथमः - आ...नाम किम् ?

आनन्दः - आनन्दः ।

द्वितीयः - शिक्षणम् .... ?

आनन्दः - M.A. अधीतवान् ।

लीला - कदा M.A. समाप्तम् ।

आनन्दः - गतवर्षे ... ।

प्रथमः - एतावत्पर्यन्तं किं कुर्वन् आसीत् ?

आनन्दः - उद्योगान्वेषणं कुर्वन् एव आसम् ।

द्वितीयः - भवान् कां कां भाषां जानाति ?

आनन्दः - सस्कृतं, हिन्दीम्, आंग्लभाषामपि जानामि ।

प्रथमः - यदि भवान् चितः भवति तर्हि अस्माकं कार्यार्थं सर्वत्र सञ्चारः करणीयः भवति । कर्तुं शक्नोति वा ?

आनन्दः - अस्तु श्रीमन् ! अवश्यं शक्नोमि ।

प्रथमः - अस्माकं संस्थायाः उत्पादनं किम् इति जानाति किल !

आनन्दः - आम् श्रीमन् ! नारिकेलतैलं खलु !

प्रथमः - सत्यम् । तस्य प्रचारः भवता करणीयः । सर्वत्र अटित्वा आपणान्

गृहाणि च गत्वा, तस्य वैशिष्ट्यम् उक्त्वा विक्रयणं करणीयम् । order प्राप्तव्यम् ।

आनन्दः - अस्तु श्रीमन् ! तथैव करोमि ।

द्वितीयः - तर्हि इदानीम् एवं कुर्मः । भवान् एकं गृहं गच्छति इति चिन्तयतु । तत्र काचित् महिला भवति । तया सह भवान् कथं व्यवहारं करोति इति अभिनयं कृत्वा प्रदर्शयतु । एषा श्रीमती लीला एव काचित् गृहिणी इति चिन्तयतु ।... भवान् आरम्भं करोतु ।

आनन्दः - अस्तु । *(पुनः पुनः श्मश्रु स्पृशति ।)*

प्रथमः - किमर्थं तथा करोति ? आरोग्यं सम्यक् नास्ति वा ? मुखे कापि वेदना अस्ति... ?

आनन्दः - नैव श्रीमन् ! किमपि नास्ति, किमपि नास्ति ।

द्वितीयः - अस्तु.... करोतु....

आनन्दः - *(कण्ठं सम्यक् कृत्वा)* नमस्काराः....

लीला - नमस्कारः ।

आनन्दः - मान्ये, अहं गङ्गानारिकेलतैल-उत्पादनसंस्थातः आगतवान् अस्मि ।

लीला - (निरासक्त्या) हू...

आनन्दः - पश्यतु मान्ये.... !

लीला - मम किमपि नापेक्षितं भोः... !

आनन्दः - क्षम्यताम्... भवत्याः मुखं पश्यामि चेत् अतीव श्रान्ता इव दृश्यते ।

लीला - सत्यम्, अहं श्रान्ता अस्मि । भवता सह सम्भाषणं कर्तुं मम उत्साहः नास्ति । महती शिरोवेदना ।

आनन्दः - आ.. तदहं ज्ञातवान् । भवत्याः शिरोवेदना अस्तीति अहं तदा एव

ज्ञातवान् । तदर्थमेव अहम् आगतवान् । पश्यतु.. एतत् तैलम् । एतस्य उपयोगं करोति चेत् कदापि शिरोवेदना न भवति ।

लीला - तत् सर्वे अपि वदन्ति ।

आनन्दः - तथा न मान्ये, उदाहरणार्थं वदामि । अहं दशवर्षेभ्यः एतस्य एव उपयोगं कुर्वन् अस्मि । मम कदापि शिरोवेदना एव न आगता ।

*(साक्षात्कारकर्तारौ हसतः)*

लीला - ओ....

आनन्दः - न केवलं तावत्... एतस्य उपयोगेन केशाः कथं कृष्णवर्णीयाः समृद्धाश्च भवन्तीति जानाति वा ? इदानीं सर्वे चलनचित्रनटाः एतस्य एव उपयोगं कुर्वन्ति ।

लीला - आ.. हा..।

आनन्दः - सत्यं मान्ये, गतसप्ताहे एवं सञ्जातम् - सः प्रसिद्धः क्रिकेट् क्रीडालुः कीर्तिकुमारः अस्ति किल ! तस्य समीपं गतवान् आसम् । सः शिरोवेदनाम् अनुभवन् आसीत् । अहम् एतत् तैलं तस्मै दत्तवान् । आरम्भे सः निराकृतवान् ।

लीला - अनन्तरम्....

आनन्दः - दिनद्वयम् उपयोगं कृत्वा पश्यतु इति अहम् उक्तवान् । अन्ते सः कथमपि स्वीकृतवान्... ।

लीला - अनन्तरम्....

आनन्दः - अनन्तरं किम् .... दिनद्वयस्य उपयोगानन्तरं सः 'मम शिरोवेदना आसीत् वा ?' इति मामेव पृष्टवान्... इदानीं सः तस्य बान्धवाः मित्राणि सर्वे अपि एतस्य एव उपयोगं कुर्वन्ति ।

सा.कर्तारौ - 'उत्तमम्, उत्तमम् !

लीला - सत्यं वा ?

आनन्दः - सत्यं भोः !

लीला - सम्यक् अस्ति कथा... *(हसति)*

*(आनन्दः अपि हसति, हाससमये श्मश्रु अधः पतति ।)*

प्रथमः - आ... किमिदं भोः ? ओ हो.. अस्मान् वञ्चयितुम् इच्छति वा ? *(भावचित्रं, तस्य मुखं च पुनः पुनः पश्यति ।)*

प्रथमः - *(समीपम् आगत्य)* ओ हो, अन्यस्य आवेदनपत्रं स्वीकृत्य तस्य उद्योगं भवान् प्राप्तुम् इच्छत्ति वा ? दुरात्मन् ! पश्यतु किं करोमि ? भवन्तम् आरक्षकालयं प्रेषयामि । (दूरवाणीसमीपं गच्छति ।)

आनन्दः - श्रीमन्... श्रीमन्... तत् मम एव भावचित्रं श्रीमन् !

प्रथमः - तर्हि एतत् नाटकं किमर्थम् ?

आनन्दः - वदामि श्रीमन् ! अद्य प्रातः मुखक्षौरसमये अकस्मात् मम श्मश्रु नष्टम् अभवत् । श्मश्रु विना मम मुखं द्रष्टुमेव न शक्यते इति मम मित्रं वदति । एतदुद्योगार्थं स्फुरद्रूपिणः दर्शनीयाः पुरुषाः एव आवश्यकाः इति भवतां नियमः अस्ति खलु ! यदि श्मश्रु नास्ति तर्हि अहं सुन्दरः न दृश्ये, यदि सुन्दरः न दृश्ये तर्हि उद्योगं न यच्छन्ति भवन्तः इति चिन्तयित्वा एवं कृतवान् । क्षन्तव्यं श्रीमन् ... !

लीला - समीचिना अस्ति भवतः कथा ! अस्तु पश्यामः । वयं साक्षात्कारस्य फलितांशं पत्रद्वारा सूचयिष्यामः । इदानीं भवान् गन्तुम् अर्हति ।

आनन्दः - आगच्छामि श्रीमन्, धन्यवादाः ।

*(पतितं श्मश्रु स्वीकृत्य कोषे संस्थाप्य गच्छति ।)*

द्वितीयः - वराकः, श्मश्रु विना एव सः सुन्दरः दृश्यते । सम्भाषणेऽपि अतीव चतुरः अस्ति । अवश्यम् एतस्मै उद्योगं दद्मः ।

*(आनन्दः मञ्चस्य पुरतः आगच्छति । उपायः स्फुरति । साक्षात्कारार्थम् स्थितानाम् अनुपङ्क्तिसमीपं गच्छति । ते सर्वे समीपम् आगच्छन्ति । सर्वे पुनः पुनः तस्य मुखं पश्यन्ति ।)*

एकः - कथम् आसीत् भोः साक्षात्कारः ?

अपरः - किं पृष्टवन्तः ?

अन्यः - कं प्रश्नं पृच्छन्ति भोः ?

आनन्दः - *(ओष्ठयोः अङ्गुलिं निधाय साभिनयम्)* श्..... साक्षात्कारः अपि नास्ति । किमपि नास्ति । तत्र गतानां सर्वेषां श्मश्रु निष्कास्य प्रेषयन्ति !

सर्वे - सत्यं वा....?

आनन्दः - आम्, पश्यन्तु मम दुरवस्थाम् । भवताम् अपि एषा दुरवस्था भवेत् । जागरूकाः भवन्तु ।

*(सर्वे मुखं मुखं पश्यन्ति..., धावन्ति च । आनन्दः हसन् निर्गच्छति ।)*

*(पटाक्षेपः)*

# शठं प्रति शाठ्यम्

**पात्राणि -**

श्रीनिवासः

लक्ष्मीः

शास्त्री

वीरभद्रः

रेवती

श्रीधरः

रामराव्

चोरः

आरक्षकाधिकारी

अन्ये च

## - प्रथमं दृश्यम् -

*(श्रीनिवासस्य गृहम् । चिन्तामग्नः श्रीनिवासः आसन्दे उपविष्टः अस्ति । पुरतः त्रिपाद्याः उपरि काफी चषकः अस्ति ।)*

लक्ष्मीः - *(प्रविश्य)* भोः... भोः... !

श्रीनिवासः - *(निरुत्तरम्)*

लक्ष्मीः - *(समीपम् आगत्य)* किमिदं भोः, अहम् आह्वयन्ती एव अस्मि, भवान् न शृणोति एव... !

श्रीनिवासः - आ... किम् उक्तवती... ?

लक्ष्मीः - किमपि न, तदा एव आनीय स्थापितं 'काफी' शीतलं जातम् । भवतः ध्यानम् अद्य कुत्र अस्ति ? किं चिन्तयति ... ?

श्रीनिवासः - हूँ ... अन्या का चिन्ता स्यात्, रेवत्याः विवाहचिन्तां विना... ! तदेव चिन्तयन् उपविष्टः ... !

लक्ष्मीः - हूँ ... *(स्मृत्वा)* किं भोः, गतसप्ताहे अत्र आगत्य गतः सः शास्त्री पुनः न आगतवानेव किल, किमर्थं स्यात् ... ?

श्रीनिवासः - अहमपि तदेव चिन्तयन् अस्मि । सः यदि आगतः स्यात् तर्हि काचित् वार्ता वा ज्ञाता स्यात् .. ।

*(द्वारे शब्दः).*

हूँ ... कश्चित् आगतवान् इति मन्ये, द्वारम् उद्घाटयतु । अथवा... भवती स्वकार्यं पश्यतु । अहमेव उद्घाटयामि ।

*(गत्वा द्वारम् उद्घाटयति, शास्त्री प्रविशति ।)*

ओ...हो...! निश्चयेन भवान् शतायुः शास्त्रिमहोदय ! यतः इदानीं भवतः नामस्मरणमेव कुर्वन्तः आस्म । तावता भवानेव

प्रत्यक्षः जातः । आगच्छतु.. उपविशतु.. ।

शास्त्री - किं, मां निन्दन्तः आसन् खलु...

श्रीनिवासः - किमर्थं निन्दनम् ... ? किमर्थं न आगतवान् भवान् इत्येव चिन्तयन्तः आस्म ।

शस्त्री - *(निःश्वस्य)* सा काचित् महती कथा भोः ! भवतु, सर्वं वदामि..। आ ... किं भगिनि! सर्वं कुशलं वा ?

लक्ष्मीः - आं, सर्वं कुशलम्..।

श्रीनिवासः - लक्ष्मि ! प्रथमं शास्त्रिमहोदयाय पानीयं ददातु ।

लक्ष्मीः - इदानीम् आनयामि । *(गच्छति)*

शास्त्री - रेवती कुत्र अस्ति..., न दृश्यते किल ?

श्रीनिवासः - सा प्रातः एव सखीगृहं गतवती ।

शास्त्री - भवतु.... । गतसप्ताहे अहं कस्यचित् वरस्य विषयम् उक्तवान् आसं खलु, तद्विषये एव वार्तालापं कर्तुं गतवान् आसम् ।

श्रीनिवासः - किम् अभवत्... ?

शास्त्री - वरः तु अत्यन्तं योग्यः ।

श्रीनिवासः - किं वयः तस्य... ?

शास्त्री - अष्टाविंशतिः वर्षाणि ।

श्रीनिवासः - उद्योगः... ?

शास्त्री - कस्मिंश्चित् विद्यालये सः उपन्यासकः अस्ति ।

श्रीनिवासः - कति जनाः भ्रातरः ते ... ?

शास्त्री - तौ द्वौ एव । तस्य अग्रजः अन्यत्र वसति । एतस्य एका अनुजा

अस्ति । मातापितृभ्यां सह एतौ द्वौ वसतः ।

श्रीनिवासः - वरः कीदृशः... ?

शास्त्री - स तु श्रीरामचन्द्रसदृशः भोः । तावत् अधीतवान् चेदपि ज्येष्ठानां विषये कियान् विनयः, कीदृशी श्रद्धा.. ! यदि सः रेवत्याः पतिः भविष्यति तर्हि तस्याः भाग्यमेव ।

लक्ष्मीः - *(प्रविश्य)* शास्त्रिमहोदय, पानीयं स्वीकरोतु । *(ददाति)*

शास्त्री - किमर्थम् एतत्सर्वम्, इदानीमेव पीतवान् आसम् । भवतु.. किञ्चित् ददातु.. *(स्वीकरोति, पिबति)* आह्.. काफी तु अद्भुतम् अस्ति ।

श्रीनिवासः - तद् भवतु शास्त्रिमहोदय, ते सर्वे रेवतीम् अङ्गीकुर्युः वा... ?

शास्त्री - रेवत्याः भावचित्रं मया प्रदर्शितम् । चित्रं दृष्ट्वा तु ते अत्यन्तं सन्तुष्टाः । अन्यच्च भवतः पुत्र्यां का न्यूनता भोः.. ?

श्रीनिवासः - जन्मपत्रिका परिशीलनीया इत्यादिकम्.... ?

शास्त्री - न.. न.., तेषां तु तद्विषये अनुरोधः कोऽपि नास्ति । ते उत्तमां वधूम् इच्छन्ति, तावदेव ।

श्रीनिवासः - तर्हि वार्तालापं कर्तुं कदा गच्छाम ...?

शास्त्री - तिष्ठतु, तिष्ठतु, महाशय... । मया इतोऽपि किञ्चित् वक्तव्यम् अस्ति ।

श्रीनिवासः - किं तत् ? वदतु भोः !

शास्त्री - वध्वाः विषये तेषाम् आक्षेपः कोऽपि नास्ति । किन्तु भवतः सकाशात् ते काञ्चित् अपेक्षां कुर्वन्ति ।

श्रीनिवासः - काम् अपेक्षां कुर्वन्ति ?

शास्त्री - श्रीनिवासमहोदय, भवान् जानाति एव, अस्मिन् काले वरदक्षिणां

विना कोऽपि न वृणोति । 'वरदक्षिणां न स्वीकुर्मः' इति केचन वदन्ति चेदपि वरोपचारः इति नाम्ना किमपि किमपि स्वीकुर्वन्ति एव ।

श्रीनिवासः - एते किमिच्छन्ति, वरदक्षिणाम्, उत वरोपचारम् ?

शास्त्री - वस्तुतः वरदक्षिणास्वीकरणं सः वरः श्रीधरः न इच्छति इति श्रुतम् । परन्तु तस्य पिता तदिच्छति । .

श्रीनिवासः - हूँ.... भवान् अस्माकं परिस्थितिं जानाति एव शास्त्रिमहोदय ! द्वित्राणि सहस्त्राणि चेत् अहं कथमपि दातुं शक्नुयाम् ।

शास्त्री - द्वित्राणि सहस्त्राणि... ! *(हासः)* कस्मिन् युगे अस्ति भवान्... ? निरुद्योगी युवकोऽपि इदानीं दशसहस्त्राणां वरदक्षिणाम् अपेक्षते । किं पुनः उपन्यासकस्य कथा ! तस्य पिता तु न्यूनातिन्यूनं विंशति-सहस्त्राणि इच्छति ।

लक्ष्मीः - विंशतिसहस्त्राणि.....!

शास्त्री - आं भगिनि ! किं कर्तुं शक्यम् ! इदानीं कालः एव तादृशः । पश्यतु, गतमासे मम भगिन्याः पुत्र्याः विवाहः जातः । तस्याः पतिः कस्मिंश्चित् कार्यालये लिपिकारः । तस्मै अपि दश सहस्त्राणि दातव्यानि अभवन् ।

श्रीनिवासः - शास्त्रिमहोदय, यदि भवान् तस्य गृहं प्रति मां नेष्यति तर्हि अहमेव तेन सह वार्तालापं करोमि । अस्माकं परिस्थितिं ज्ञात्वा सः अङ्गीकुर्यादिति मम विश्वासः अस्ति ।

शास्त्री - सा तु केवलं भवतः भ्रान्तिः !

श्रीनिवासः - तथापि प्रयत्नं कुर्मः । यदि भाग्यम् अस्ति तर्हि सिद्ध्यति, नो चेत् नास्ति !

शास्त्री - भवतु, तर्हि अद्यैव गच्छामः ।

## – द्वितीयं दृश्यम् –

*(वीरभद्रस्य गृहम् । वीरभद्रः, श्रीनिवासः, शास्त्री च आसन्देषु उपविष्टाः सन्ति ।)*

वीरभद्रः - पश्यतु शास्त्रिमहोदय, मम अभिप्रायम् अहं स्पष्टम् उक्तवान् अस्मि । वधूविषये अस्माकं कोऽपि आक्षेपः नास्ति । परन्तु वरदक्षिणाविषये तु मम निर्णयः निर्णयः एव । तत्र परिवर्तनं तु न शक्यमेव ।

श्रीनिवासः - तथा न वदतु महाभाग ! अहं तु सेवानिवृत्तः प्राथमिकशाला-शिक्षकः । इदानीं तु निवृत्तिवेतनेन कथमपि जीवनं यापयन् अस्मि । पुत्रीं यदि वधूरूपेण समीचीनं गृहं प्रापयामि, तर्हि मम उत्तरदायित्वं समाप्तं भवति । अनन्तरं 'राम, कृष्ण' इति देवध्यानं कुर्वन् कालं यापयामि ।

वीरभद्रः - तत्सर्वं सत्यं महाशय ! परन्तु भवतः यावत्यः समस्याः सन्ति ततोऽपि अधिकाः समस्याः ममापि सन्ति । मयापि पुत्र्याः विवाहः करणीयः अस्ति । वरदक्षिणां विना तां परिणेतुं कोऽपि सिद्धः भवति वा ? तस्याः विवाहसन्दर्भे मया कियत् दातव्यं भविष्यतीति कः जानाति ? तत्सर्वं विचिन्त्य एव अहम् उक्तवान् अस्मि ।

शास्त्री - तत्तु सत्यं...परन्तु वीरभद्रमहाभाग, रेवत्याः विषये किञ्चित् वक्तव्यम् अस्ति । सत्यं वक्तव्यं चेत् सा भवतः पुत्रस्य अत्यन्तं अनुरूपा । तादृशी गुणवती सुशीला मया अन्या कापि न दृष्टा । गृहकार्यविषये तु सा अत्यन्तं कुशला ।

वीरभद्रः - हुँ.... ततोऽपि गुणवतीनां विद्यावतीनां बह्वीनां वधूनां प्रस्तावाः आगताः आसन् भोः ! परन्तु मया स्पष्टं निराकृतम् । इदानीमपि पञ्चाशत् सहस्राणि दातुं सिद्धाः कन्यापितरः बहवः सन्ति । अहं तु भवतः विषये गौरवबुद्ध्या 'एषः सम्बन्धः भवतु' इति

उक्तवान् । यदि तावत् दातुं न शक्यते तर्हि एषः सम्बन्धः मास्तु एव ।

श्रीनिवासः - तथा न वदतु महाभाग ! वयं भवतः सम्बन्धम् इच्छामः एव ।

शास्त्री - परन्तु वीरभद्रमहाभाग, श्रीधरः वधूं दृष्ट्वा अङ्गीकुर्यात् खलु !

वीरभद्रः - तद्विषये भवतः चिन्ता एव मास्तु । मम पुत्रः श्रीरामचन्द्रः इव पितृवाक्यपरिपालकः । मया सूचितां परिणेतुं सः सिद्धः भवत्येव । तत्र संशयः एव नास्ति । भवन्तः धनस्य व्यवस्थां कुर्वन्तु । अन्यत्सर्वं करिष्यामः ।

श्रीनिवासः - आ...क्षम्यताम्, अहम् अन्तिमवारं प्रार्थये । अहं तावद् दातुं न शक्तः । कथमपि यत्किञ्चित् दद्याम् । तदेव स्वीकृत्य मम पुत्री भवद्भिः अङ्गीकर्तव्या ।

वीरभद्रः - शास्त्रिमहोदय, अहं यावद् वदामि चेदपि एषः मम समस्यां न अवगच्छति एव ! त्यजामः एतस्य सम्बन्धस्य विषयम् ।

श्रीनिवासः - न...न...! मम सप्ताहात्मकम् अवकाशं ददातु महाशय ! तावति काले अहं विचिन्त्य कथयिष्यामि ।

वीरभद्रः - अस्तु, तथैव करोतु । सप्ताहानन्तरम् आगत्य निर्णयं वदतु ।

शास्त्री - भवतु, वयं साधयाम : तर्हि...!

*(गच्छतः)*

## - तृतीयं दृश्यम् -

*(श्रीनिवासस्य गृहम् । लक्ष्मीः श्रीनिवासः च उपविश्य सम्भाषणं कुर्वन्तौ स्तः ।)*

लक्ष्मीः - हुँ..... तर्हि गमनप्रयोजनं न सिद्धम् इत्यभवत्.. ।

श्रीनिवासः - किं कुर्मः लक्ष्मि ! वरः अत्यन्तं योग्यः । तथापि वरदक्षिणाविषये

कथं तेषां व्यामोहः इति न जानामि ।

लक्ष्मीः - हुँ.... को वा धनाशया मुक्तः भवति ! भवतु.., एषः सम्बन्धः अस्माभिः कर्तुं न शक्यः इति विचिन्त्य तूष्णीं भवामः, तावदेव ।

श्रीनिवासः - एवमेव कति प्रसङ्गाः अभवन् लक्ष्मि ! कुत्रचित् वरदक्षिणां न अपेक्षन्ते, परन्तु वरः कुरूपः निरुद्योगी वा । कुत्रचित् वरः उत्तमः, परन्तु गृहे अनेकाः समस्याः । अत्र तु वरोऽपि उत्तमः, गृहे समस्याः अपि न सन्ति, परन्तु तेषां वरदक्षिणा व्यामोहः !

लक्ष्मीः - यत्किमपि भवतु, तावतीं वरदक्षिणां दातुं वयं न शक्नुमः । 'रेवत्याः भाग्यं नास्ति' इति विचिन्त्य एतं प्रस्तावमेव विस्मरामः ।

श्रीनिवासः - *(किञ्चित् विचिन्त्य, सगम्भीरम्)* परन्तु लक्ष्मि ! अहं तु रेवत्याः विवाहं तेन श्रीधरेण सहैव कारयामि ।

लक्ष्मीः - *(साश्चर्यम्)* इत्युक्ते.. वरदक्षिणां विना ते अङ्गीकुर्युः इति इदानीमपि आशा वा ?

श्रीनिवासः - नैव, वरदक्षिणां दत्त्वा एव विवाहं कारयिष्यामि । विंशति सहस्राणि अपि दास्यामि ।

लक्ष्मीः - *(साश्चर्यम्)* किं भोः, भवान् विंशतिसहस्राणि दास्यति वा..? सर्वकारस्य अदृष्टयोजनायां धनं किमपि लब्धं किम् ?

श्रीनिवासः - नैव लक्ष्मि ! एतत् गृहं विक्रीय धनं दास्यामि इति निर्णयं कृतवान् अस्मि ।

लक्ष्मीः - *(सखेदम्)* किम्..., अस्मदीयमिति विद्यमानं एतदेकं गृहमपि विक्रीणीते वा ? अग्रे का वा गतिः आवयोः....?

*(रेवती प्रविशति । मातापितरौ गम्भीरसम्भाषणे मग्नौ इति ज्ञात्वा दूरे एव किमपि कार्यं कुर्वती इव तिष्ठति ।)*

श्रीनिवासः - भवती चिन्तां न करोतु लक्ष्मि ! रेवती प्रथमम् उत्तमं गृहं

प्राप्नोतु । तेन आवयोः उत्तरदायित्वं समाप्तं भवति । अनन्तरं खलु आवयोः जीवनस्य चिन्ता । गृहे उपविश्य कालं यापयितुं ममापि कष्टम् । अतः कुत्रापि पुनः कमपि उद्योगं करोमि । आवयोः जीवनार्थं यावत् आवश्यकं तावत् कथमपि सम्पादयितुं शक्यम् ।

लक्ष्मीः - नैव, विद्यमानं गृहमपि विक्रीतं चेत् अग्रे कुत्र वसेम, कथं वा जीवेम... ? मास्तु भोः मास्तु ।

श्रीनिवासः - नैव लक्ष्मि ! अहं निर्णयं कृतवान् अस्मि । गृहस्य विक्रयणं करिष्यामि एव । विंशतिसहस्राणि दत्त्वा रेवत्याः विवाहं करिष्यामि एव । भवती निश्चिन्ता भवतु ।

लक्ष्मीः - हूँ.... मम अभिप्रायः मया उक्तः, इतःपरं भवान् एव प्रमाणम् । यथा इच्छति तथा करोतु । *(रेवतीं दृष्ट्वा)* अरे रेवति... कदा आगतवती ? भवती आगतवती इति न ज्ञातमेव किल.. ।

शालिनी - इदानीमेव आगतवती अम्ब !

लक्ष्मीः - भवतु, प्रथमं भोजनं कुर्मः । अनन्तरं चिन्तयामः । आगच्छन्तु ।

## - चतुर्थं दृश्यम् -

*(श्रीनिवासस्य गृहम्)*

रामराव् - आ.. भवतः गृहम् अस्माभिः अङ्गीकृतं श्रीनिवासमहोदय । तथापि सार्धैकलक्षरूप्यकाणि इति तु किञ्चित् अधिकमेव । भवतु.. पश्यतु, मूल्यस्य अर्धभागम् इदानीमेव ददामि, स्वीकरोतु । *(धनं ददाति ।)*

श्रीनिवासः - *(स्वीकृत्य)* धन्यवादः ।

रामराव् - अन्यत् भवन्तः यदा गृहं त्यक्ष्यन्ति तदा दास्यामि । भवान् प्रथमं पुत्र्याः विवाहं समापयतु । गृहस्य पञ्चीकरणादिकम् अनन्तरं कारयिष्यामः ।

श्रीनिवासः - तथैव भवतु... ।

रामराव् - तर्हि अहं साधयामि... पुनर्मिलामः ।

श्रीनिवासः - अस्तु, पुनर्मिलामः ।

*(रामरावः गच्छति)*

लक्ष्मीः - अहो..., ईदृशाः जनाः अपि भवन्ति किल अस्मिन् लोके ! अस्माभिः यावदुक्तं तावत् मूल्यमपि सः रामराव् अङ्गीकृतवान् । अर्धभागं धनमपि अद्यैव दत्तवान् इत्युक्ते.. !

श्रीनिवासः - रेवत्याः कङ्कणभाग्यं सन्निहितम् इत्यर्थः । अतः एव एतावत् सुलभतया सिद्धम् ।

लक्ष्मीः - हूँ.... तदपि स्यात्...।

## - पञ्चमं दृश्यम् -

*(विवाहस्य दृश्यम् । उपविष्टौ वधूवरौ । पुरतः उपविष्टः शास्त्री मन्त्रं वदति । केचन इतस्ततः सञ्चरन्ति । पुरतः दृश्येते वीरभद्रः, श्रीनिवासः च ।)*

वीरभद्रः - श्रीनिवासमहोदय, कुत्र अस्ति धनम् ? प्रथमं धनं दातव्यम् । अनन्तरमेव वध्वाः कण्ठे माङ्गल्यधारणम् ।

श्रीनिवासः - अत्र अस्ति महाशय, अस्यां यानपेटिकायाम् अस्ति । स्वीकरोतु । सम्यक् विंशतिसहस्राणि सन्ति । कृपया गणयतु । *(यानपेटिकां ददाति ।)*

वीरभद्रः - *(स्वीकृत्य, हसन्)* भवतु, तर्हि विवाहः प्रचलतु...।

शास्त्री - *माङ्गल्यं तन्तुनानेन मम जीवनहेतुना ।*
*कण्ठे बध्नामि सुभगे सञ्जीव शरदां शतम् ।।*
*(मङ्गलवाद्यानि श्रूयन्ते । श्रीधरः मङ्गलसूत्रं धारयति ।)*

## - षष्ठं दृश्यम् -

*(यानपेटिकां गृहीत्वा वीरभद्रः प्रविशति । प्रकोष्ठे मन्दः प्रकाशः अस्ति ।)*

वीरभद्रः - *(स्वगतम्)* हूँ... कथमपि विंशतिसहस्राणि हस्तङ्गतानि । विंशति-सहस्राणि... ! अथवा... सकृत् गणयामि । अत्र कोऽपि नास्ति । शीघ्रं गणयामि... आ... *(पेटिकाम् उद्घाट्य पश्यति ।)* सर्वाणि शतरूप्यकाणां धनपत्राणि.. ! *(गणयति ।)* एकं...द्वे...त्रीणि... चत्वारि...पञ्च...षट्...

*(गृहीतच्छुरिकः चोरः शनैः प्रविशति)*

चोरः - *(समीपम् आगत्य)* रे वीरभद्र... ! धनं सर्वम् अत्र ददातु ।

वीरभद्रः - *(भयेन)* आ..आ.., कः भवान्... ? किमर्थम् अत्र आगतः...? चोरः, चोरः... !

चोरः - हुश्...यदि पुनः एकं शब्दम् उच्चारयति तर्हि एषा छुरिका साक्षात् भवतः हृदयमेव प्रविशति । जागरूको भवतु ।

वीरभद्रः - नैव...नैव... । धनं, मम धनम्....!

चोरः - धनपिशाच ! पुत्रस्य नाम्ना भवान् धनं गृह्णाति वा ? ददातु अत्र... हूँ ....।

वीरभद्रः - हूँ.... स्वीकरोतु.. स्वीकरोतु...! *(स्वल्पं धनं ददाति ।)*

चोरः - आ... तावदेव न, सर्वमपि ददातु, हँ...।

वीरभद्रः - आ... स्वीकरोतु... स्वीकरोतु...! *(सर्वं ददाति ।)*

चोरः - साधु, साधु ! *(स्वगतम्)* इतोऽपि कञ्चित्कालम् अत्रैव तिष्ठतु

एषः दुष्टः । एतस्य हस्तपादं वस्त्रेण बद्ध्वा मुखमपि वस्त्रेण पूरयामि येन एषः आक्रोशं कर्तुं न शक्नुयात्.. ।

*(तथैव करोति । वीरभद्रः विरोधं कुर्वन् रोदिति । चोरः हसन् पेटिकां स्वीकृत्य गच्छति)*

श्रीधरः - *(प्रविश्य)* अरे, पिता कुत्र अस्ति, न दृश्यते एव... । तात... तात...! *(अन्विष्यन् समीपम् आगत्य)* अरे, किमिदं भोः... ? *(विमोचयति)* कथम् एवं सञ्जातम्... ?

वीरभद्रः - चोरः... चोरः... । कश्चित् चोरः आगत्य मम सर्वस्वम् अपहृतवान् । भवतः वरदक्षिणारूपेण प्राप्तानि विंशतिसहस्त्राणि अपि अपहृतवान् ।

श्रीधरः - हा हन्त !

वीरभद्रः - सः चोरः अत्रैव कुत्रापि अस्ति, दूरं गतवान् न स्यात् । गह्णातु तम् । चोरः.... चोरः .... । *(उच्चैः आक्रोशति)*

*(जनाः अपि आक्रोशन्ति । बैक्यानस्य शब्दः श्रूयते ।)*

आरक्षकाधिकारी - *(नेपथ्ये)* किं भोः, किं सञ्जातम् ? कुत्र अस्ति चोरः ? किम् अपहृतम् ?

वीरभद्रः - ... मम ...विंशतिसहस्त्राणि...

श्रीधरः - (अर्धे एव) श्... तात... अत्र शृणोतु... कश्चित् आरक्षक-अधिकारी आगतः अस्ति ।

वीरभद्रः - आ... समीचीनं जातम् । तं सर्वं निवेदयामि ।

श्रीधरः - *(कर्णे)* परन्तु तं निवेदयति चेत् इतोऽपि समस्या भवति ।

वीरभद्रः - का समस्या ?

श्रीधरः - भवतः समीपे तावत् धनं कुतः आगतम् इति प्रश्नः भवति । तदा तु वरदक्षिणारूपेण स्वीकृतम् इति वक्तव्यमेव भवति ।

परन्तु इदानीं वरदक्षिणास्वीकरणं न्यायविरुद्धं नियमविरुद्धं किल । अतः तेनैव कारणेन भवतः मम च बन्धनमपि भविष्यति । आवाभ्यां कारागृहं प्रति गन्तव्यं भविष्यति ।

वीरभद्रः - *(सगद्गदम्)* आ.... आ... तर्हि किं कुर्मः इदानीम्..?

श्रीधरः - भवान् तूष्णीं तिष्ठतु, अहं तम् आरक्षकाधिकारिणं कथमपि प्रेषयामि ।

अधिकारी - *(प्रविश्य)* किं भोः..., 'चोरः चोरः' इति कः आक्रोशं कृतवान् ? कुत्र अस्ति चोरः.. ?

श्रीधरः - हि..हि.. । *(हसन्)* परन्तु भवान् कथं समये अत्र आगतवान् श्रीमन्... ।

अधिकारी - किमपि कार्यार्थम् अहम् एतनैव मार्गेण गच्छन् आसम् । तदा चोरः, चोरः इति आक्रोशं श्रुतवान् । अतः आगतवान् । कः तथा आक्रोशं कृतवान् ?

श्रीधरः - आक्रोशं तु मम पिता एव कृतवान् । परन्तु चोरः कोऽपि अत्र नागतः ।

अधिकारी - तर्हि, किमर्थम् आक्रोशं कृतवान् ?

श्रीधरः - *(हसन्)* अद्य मम विवाहः इति कारणतः सः परह्यः आरभ्यापि अतीव कार्यव्यग्रः आसीत् । अतः ह्यः रात्रौ निद्रामपि न कृतवान् । इदानीं दशनिमेषपूर्वं श्रान्तः सन् अत्र आगत्य सुप्तः । तत्रैव एकं स्वप्नं दृष्टवान् । स्वप्ने चोरं दृष्ट्वा भीत्या सः आक्रोशं कृतवान्, तावदेव ।

अधिकारी - किं भोः महाशय, सत्यं वा...?

वीरभद्रः - आं, सत्यम् । *(सविषादम्)* सर्वोऽपि स्वप्नः एव ।

अधिकारी - तर्हि समीचीनः अस्ति भवतः स्वप्नः । ह...ह... *(हसति)*

इदानीं मम आगमनमपि स्वप्ने इति मा चिन्तयतु, अहं प्रत्यक्षम् आगतः अस्मि...ह...ह...।

' *(सर्वे हसन्ति)*

भवतु, अहं साधयामि ।

श्रीधरः - नैव महाशय, भवान् मम विवाहसन्दर्भे आगतः अस्ति । अतः भवता विवाहभोजनं कृत्वा एव गन्तव्यम् ।

अधिकारी - तथैव भवतु । धन्यवादः ।

## - सप्तमं दृश्यम् -

श्रीधरः - रेवति... रेवति...!

रेवती - ........ !

श्रीधरः - रेवति....इतोऽपि कोपः न गतः वा...?

रेवती - उ हूं....।

श्रीधरः - हूँ.....किमर्थं मयि तावान् कोपः....?

रेवती - *(रुदती)* भवता... मया लिखितं पत्रं न प्राप्तमासीत् वा ?

श्रीधरः - निश्चयेन प्राप्तमासीत् ।

रेवती - तत् पत्रं भवता न पठितं वा ?

श्रीधरः - पठितं, सम्यक् पठितम् । मुक्ताफलसदृशाणि भवत्याः अक्षराणि पुनः पुनः पठितानि ।

रेवती - तर्हि... तथापि किमर्थं माम् अङ्गीकृतवान्...?

श्रीधरः - हु.... यतः तत् पत्रं पठितम्, अतः एव अङ्गीकृतवान् । तस्मिन् पत्रे किं लिखितवती आसीदिति स्मरति वा ? पश्यतु... एतदेव खलु भवत्या लिखितं पत्रम् ? *(दर्शयति)*

रेवती - ऊ....

श्रीधरः - पुनरेकवारं पठामि वा ? *(पठति)*

श्रीमते श्रीधराय... *(रेवती पत्रं स्वीकृत्य पठति)*

सादरं वन्दनानि । एतत् पत्रं लिखन्त्याः मम परिचयः भवतः न स्यात् । अथवा भावचित्रद्वारा एतावता मम परिचयः जातः अपि स्यात् । अहं तस्य पुत्री यः परह्यः स्वपुत्र्याः विवाहविषये भवतः पितरं प्रार्थयितुम् आगतवान् आसीत् । तैः तत्र कृतः वार्तालापः भवता ज्ञातः स्यात् । वरदक्षिणां विना विवाहः न शक्यः एव इति भवतः पित्रा स्पष्टम् उक्तम् । मम पिता तु न तावान् धनिकः। तथापि सः कथमपि मम विवाहं कर्तुमिच्छन्, तदर्थं धनं सङ्ग्रहीतुम् अस्मदीयमिति विद्यमानम् एकमेव गृहमपि विक्रेतुं सज्जः अस्ति इदानीम् । अस्माकं प्रतिरोधं विरुद्ध्यापि सः तस्य विक्रयणं करिष्यति एव । परन्तु यत् गृहं मम पिता अत्यन्तकष्टेन निर्मितवान्, यत्र तस्य जीवनस्य बहुभागः यापितः, तस्य गृहस्य विक्रयणं, मम निमित्तं क्रियमाणम् अहं सर्वथा न इच्छामि ।

भवान् विद्यावान्, विद्यालये उपन्यासकः अपि । तथापि वरदक्षिणापिशाचात् भवान् न मुक्तः । तादृशस्य भवतः अपि यदि हृदयम् अस्ति, हृदये यदि केचन भावाः सन्ति, तर्हि कृपया एकम् उपकारं करोतु । मां न अङ्गीकरोतु । किमपि कारणम् उक्त्वा मां निराकरोतु । तेन एषः विवाहः न भविष्यति । मम पित्रा सम्पादितं गृहमपि रक्षितं भवति ।

अन्यदपि स्पष्टं लिखामि – यदि मम अभिप्रायम् अविगणयन् मां परिणेष्यति, अहं भवतः अनुकूला पत्नी न भविष्यामि । यतः पितुः दुःखकारणेन भग्नहृदया अहं भवता सह सुखेन

जीवितुम् अस्मिन् जन्मनि न शक्नोमि । अतः सविनयं प्रार्थये, मां निराकरोतु ।

इति काचित् मन्दभागा ।

*(रोदिति)*

श्रीधरः - हूँ..... एतदेव किल भवत्याः पत्रम् ।

रेवती - *(रोदिति)* आम् ... । तर्हि, तथापि किमर्थं मां न निराकृतवान् । अहं जानामि, भवन्तः धनिकाः अस्मादृशानां जीवनैः क्रीडन्ति ।

श्रीधरः - हुँ.. भवतु.. इदानीं मम अङ्गीकारेण किम् अभवत् ?

रेवती - *(कोपेन)* अन्यत् किम् ? अस्माकं गृहं विक्रीतं, माता पितरौ अनाथौ जातौ । यानि विंशतिसहस्राणि गृहं विक्रीय भवतः पित्रे दत्तानि तानि अपि चोरितानि । अतः तस्य दृष्ट्या अपि अहम् अशुभकारिणी जाता । किमन्यत् भवेत् ? धनिकानां भवतां क्रीडायाम् अहं बलिपशुः अभवम् ।

श्रीधरः - बलिपशुः न जाता रेवति ! परन्तु मम गृहदेवता जाता भवती । भवती तस्मिन् विषये चिन्तां न करोतु । अद्य चोरेण विंशति-सहस्ररूप्यकाणि अपहृतानि खलु ! तानि कुत्रापि न गतानि । अत्रैव सन्ति, पश्यतु... । *(यानपेटिकां दर्शयति ।)*

रेवती - *(आश्चर्येण)* आ... ! तर्हि... तर्हि.... सः चोरः .... ?

श्रीधरः - सः चोरः न, मम सहोद्योगी रमेशः । न केवलं सः, सः आरक्षक-अधिकारी अपि मम मित्रमेव ।

रेवती - एवं वा ?

श्रीधरः - इतोऽपि वदामि वा, भवत्याः पितुः गृहं क्रीतमिव येन नाटकं कृतं सः रामराव् अपि मम मित्रमेव । अतः एव सः आरम्भे एव तावत् धनं दत्तवान् ।

रेवती - एतत् नाटकं तर्हि बहु पूर्वमेव आरब्धम् !

श्रीधरः - हू... तस्मिन् दिने यदा भवत्याः पत्रं पठितं तदा एव अहं मनसि निर्णयं कृतवान्, यदि वृणोमि तर्हि एतामेव इति । यतः तस्य पत्रस्य पठनेन मातापित्रोः विषये भवत्याः श्रद्धां, स्वाभिमानं, धैर्यं च ज्ञात्वा अहम् एषा एव मम अनुरूपा इति निर्णयं कृतवान् । अनन्तरं 'केनापि उपायेन रेवती एव मम पत्नी भवेत्, तस्याः पित्रा वरदक्षिणारूपेण विंशतिसहस्त्ररूप्यकाणि दत्तानि इत्यपि भवेत्, परन्तु तत् दातुं तेन गृहस्य विक्रयणमपि कृतं न भवेत् । तानि रूप्यकाणि सः पुनः प्राप्नुयात् । मम पिता तु वरदक्षिणा-ग्रहणपूर्वकमेव पुत्रस्य विवाहं कृतवान् इत्यपि चिन्तयेत् । शठं प्रति शाठ्यमेव प्रयुक्तं स्यात् । एतत् सर्वं कथं सम्भवेत्' इति विचिन्त्य वयं मित्राणि नाटकमेकम् अभिनीतवन्तः ।

रेवती - तर्हि अस्माकं गृहस्य का गतिः इदानीम् ?

श्रीधरः - गतिः का ? एतानि रूप्यकाणि मित्राय प्रत्यर्पयामि, गृहं तु भवदीयमेव तिष्ठति ।

रेवती - हूँ....... तर्हि एतावत्पर्यन्तं भवद्भिः सुदीर्घं नाटकमेव कृतम् !

श्रीधरः - हूँ.... भवती न जानीयात् यत् अयं श्रीधरः नाटके चतुरः इति । अद्य पर्यन्तम् अनेकेषु नाटकेषु मया पारितोषिकाणि प्राप्तानि । परन्तु अस्मिन् नाटके मया अत्युत्कृष्टं पारितोषिकं प्राप्तं येन अहं धन्यः अस्मि ।

रेवती - किं तद् पारितोषिकम् ?

श्रीधरः - तत्तु पारितोषिकं निर्जीवं न, सजीवं पारितोषिकम्......। इदमेव... *(तस्याः चिबुकं स्पृशति । रेवती लज्जया शिरः अवनतं करोति ।)*

*(पटाक्षेपः)*

# रामतपोवनाभिगमनम्

**पात्राणि –**

दशरथः

वसिष्ठः

विश्वामित्रः

रामः

लक्ष्मणः

सेवकः

*(दशरथस्य आस्थानम् । दशरथः वसिष्ठः च उपविष्टौ स्तः ।*
*सेवकः प्रविशति ।)*

सेवकः - *(प्रविश्य)* जयतु महाराजः ! प्रभो ! विश्वामित्रमहर्षिः आगतः अस्ति ।

दशरथः - *(उत्थाय)* कः... ? विश्वामित्रमहर्षिः वा ? तं शीघ्रमेव अन्तः प्रवेशय ।

सेवकः - यथाज्ञापयति महाराजः ।

*(गच्छति - विश्वामित्रेण सह प्रत्यागच्छति ।)*

दशरथः - महर्षे ! अभिवादये । *(प्रणमति)*

विश्वामित्रः - महाराज ! विजयी भव !

दशरथः - एतदासनं अलङ्कुरोतु ।

विश्वामित्रः - तथैव अस्तु । *(उपविशति)*

दशरथः - पूज्य ! सर्वं कुशलं किम् ?

विश्वामित्रः - आं महाराज ! सर्वं कुशलम् ।

दशरथः - भवतः आगमनकारणं ज्ञातुं शक्नोमि किम् ?

विश्वामित्रः - वदामि । परन्तु भवान् मया यद् अपेक्षितं 'तत् ददामि' इति वचनं ददाति चेत् निश्चयेन वदामि ।

दशरथः - महर्षे ! किमर्थं संशयः ! भवान् किम् इच्छति वदतु, निश्चयेन ददामि ।

विश्वामित्रः - राजन् ! वयं लोकहितार्थं यज्ञं कुर्वन्तः स्मः । परन्तु केचन राक्षसाः यज्ञे विघ्नम् उत्पादयन्तः सन्ति ।

दशरथः - के ते राक्षसाः ?

विश्वामित्रः - ताटका नाम राक्षसी अस्ति । मारीचः सुबाहुः च तस्याः पुत्रौ । एते अस्मान् पीडयन्ति ।

दशरथः - किं कुर्वन्ति ते ?

विश्वामित्रः - यज्ञसमाप्तिसमये यज्ञवेदिकायां रक्तमांसादिकं क्षिप्त्वा यज्ञं नाशयन्ति ।

दशरथः - अहो दुरात्मानः !

विश्वामित्रः - तदर्थं, राक्षससंहारं कृत्वा यागस्य रक्षणं कर्तुं भवतः पुत्रं रामं मया सह प्रेषयतु ।

दशरथः - किं वदति महर्षे ! राक्षसानां संहारार्थं रामः प्रेषणीयः वा ?

विश्वामित्रः - आं, रामं लक्ष्मणं च प्रेषयतु ।

दशरथः - महर्षे ! रामः इदानीमपि पञ्चदशवर्षीयः बालः । सः कथं वा राक्षसानां संहारं कुर्यात् ? लक्ष्मणस्तु इतोऽपि बालः ।

विश्वामित्रः - रामः राक्षससंहारं कर्तुं समर्थः अस्ति राजन् ! तमेव प्रेषयतु ।

दशरथः - मास्तु श्रीमन् ! बहुकालादनन्तरं मया पुत्राः प्राप्ताः । तान् पुत्रान् दूरं प्रेषयितुम् अहं न शक्नोमि । अन्यच्च....

विश्वामित्रः - *(सकोपम्)* तर्हि राजन् ! मम यज्ञस्य रक्षणं कथम् ?

दशरथः - तद्विषये चिन्ता मास्तु । चतुरङ्गबलेन सह अहमेव आगच्छामि । राक्षससंहारं करोमि ।

विश्वामित्रः - *(विहस्य)* महाराज ! मारीचसुबाहू साधारणौ इति मा चिन्तयतु । तयोः वधं कर्तुं श्रीरामः एव समर्थः । तमेव प्रेषयतु ।

दशरथः - क्षम्यतां महर्षे ! एतावत्पर्यन्तं रामः कदापि राजभवनात् बहिरपि न गतवान् । सः घोरे अरण्ये कथं सञ्चारं कुर्यात् ! मास्तु महर्षे ! मास्तु .....

विश्वामित्रः - तर्हि भवान् रामं प्रेषयितुं न इच्छति ....

दशरथः - परन्तु अहमेव आगच्छामि किल ... !

विश्वामित्रः - नापेक्षितम् । भवतः आगमनं सर्वथा नापेक्षितम् । यदि शक्यं रामं लक्ष्मणं च प्रेषयतु । नो चेत् मह्यं गमनाय अनुमतिं ददातु ।

दशरथः - *(स्वगतं)* तर्हि किं करोमि इदानीम् ... ? *(चिन्तयति)*

वसिष्ठः - दशरथ !

दशरथः - वसिष्ठमहर्षे ! भवान् सर्वं श्रुतवान् किल ! किं कुर्मः इदानीम्...?

वसिष्ठः - महाराज ! एषः विश्वामित्रः साधारणः न; स्वयं क्षत्रियकुले जातः अपि स्वप्रयत्नेन एव ब्रह्मर्षिपदं प्राप्तवान् । त्रिशङ्कु महाराजं सदेहं स्वर्गं प्रति प्रेषितवान् एषः । एतस्य सामर्थ्यम् अपरिमितम् । एतेन सह रामलक्ष्मणौ प्रेषयति चेत् तयोः महान् लाभः एव भवति ।

दशरथः - तर्हि भवतः अभिप्रायः अपि तथैव वा ?

वसिष्ठः - आं, यतः विश्वामित्रः शस्त्रशास्त्रयोः पारङ्गतः । तेन रामलक्ष्मणौ अपि शस्त्रास्त्राणाम् उपदेशं प्राप्तुम् अर्हतः ।

दशरथः - अस्तु । यदि भवतः अपि आशयः एवमेव अस्ति, तर्हि अवश्यं प्रेषयामि । *(विश्वामित्रम् उद्दिश्य)* महर्षे ! क्षणं तिष्ठतु । रामलक्ष्मणौ अत्रैव आगच्छतः । कः तत्र ... ?

सेवकः - आज्ञापयतु महाराजः !

दशरथः - इदानीमेव रामं लक्ष्मणं च अत्र आनयतु ।

सेवकः - यथाज्ञापयति देवः । *(गच्छति, रामलक्ष्मणाभ्यां सह आगच्छति ।)*

रामः<br>लक्ष्मणः } - जनक ! अभिवादये । *(सहैव वदतः)*

दशरथः - आयुष्मान् भव ! आयुष्मान् भव !

रामः
लक्ष्मणः } - *(वसिष्ठम्)* आचार्य, अभिवादये ।

वसिष्ठः - कीर्तिमान् भव ! कीर्तिमान् भव !

दशरथः - तत्र पश्यतु, सः विश्वामित्रमहर्षिः । सः अस्माकं सर्वेषामपि पूज्यः ।

रामः
लक्ष्मणः } - महर्षे ! अभिवादये ।

विश्वामित्रः - विजयी भव ! विजयी भव !

दशरथः - वत्स श्रीराम । एषः विश्वामित्रः गाधिराजस्य पुत्रः । महातपाः । ब्रह्मर्षिः । सः इदानीं भवतः साहाय्यम् इच्छति ।

रामः - *(आश्चर्येण)* किं मम साहाय्यम् ? जनक ! विनोदार्थम् एवं वदति वा भवान् ?

विश्वामित्रः - नैव । भवतः पिता यदुक्तवान् तत् सत्यमेव राम ! वत्स ! अहं लोकहितार्थं यज्ञमेकं कुर्वन् अस्मि । तत्र राक्षसाः विघ्नम् उत्पादयन्ति । ते राक्षसाः भवता मारणीयाः ।

रामः - परन्तु तान् राक्षसान् मारयितुं अहं शक्तः वा पूज्य ?

विश्वामित्रः - किमर्थं न ? भवन्तं विना अन्यैः तेषां मारणं न शक्यम् । अतः एव भवतः लक्ष्मणस्य च साहाय्यम् अहं प्रार्थितवान् ।

लक्ष्मणः - ते राक्षसाः कुत्र सन्ति महर्षे !

विश्वामित्रः - अरण्ये सन्ति । तत्रैव भवतौ नयामि । भवन्तौ आगच्छतः किल ?

रामः - जनकः अनुमतिं ददाति चेत् अहं सज्जः ।

लक्ष्मणः - अहम् अपि सज्जः ।

विश्वामित्रः - महाराज ! किं वदति भवान् ?

दशरथः - वक्तव्यं किमस्ति महर्षे ! भवतः कुलगुरुवसिष्ठस्य च वचनानुसारं रामलक्ष्मणौ भवता सह प्रेषयामि । वत्स राम... ! लक्ष्मण... !

रामः<br>लक्ष्मणः } - जनक... !

दशरथः - अद्य आरभ्य महर्षिः विश्वामित्रः भवतोः गुरुः । तस्य आदेशः पालनीयः ।

रामः<br>लक्ष्मणः } - जनक ! तथैव भवतु ।

दशरथः - आ.... महर्षे .... !

विश्वामित्रः - महाराज !

दशरथः - अद्यपर्यन्तं मम पुत्रौ राजभवनात् बहिः कुत्रापि न गतवन्तौ । अतः कृपया तौ अतीव जागरूकतया नेतव्यौ ।

विश्वामित्रः - राजन् ! चिन्ता मास्तु । अहं मम पुत्रौ इव एतौ पश्यामि ।

दशरथः - रामलक्ष्मणौ अद्यापि बालौ । तयोः सम्भाषणे, आचरणे वा अपराधाः भवेयुः । ते कृपया क्षन्तव्याः ।

विश्वामित्रः - राजन् ! रामलक्ष्मणौ न साधारणौ, अपि तु अवतारपुरुषौ । अतः तयोः विषये चिन्ता एव मास्तु ।

दशरथः - राम ! लक्ष्मण .... !

रामः<br>लक्ष्मणः } - जनक !

दशरथः - महर्षेः यज्ञं समाप्य शीघ्रमेव प्रत्यागम्यताम् ।

रामः<br>लक्ष्मणः } - अस्तु । आगच्छामः ।

विश्वामित्रः - तर्हि वयं साधयामः, पुनः मिलामः ।

दशरथः - अस्तु । शीघ्रमेव सर्वे प्रत्यागच्छन्तु ।

विश्वामित्रः<br>रामः<br>लक्ष्मणः } - अस्तु, आगच्छामः ।

दशरथः - राम ! जागरूकतया गच्छतु, लक्ष्मण, भवान् अपि ।

रामः<br>लक्ष्मणः } - अस्तु आगच्छामः ।

*(विश्वामित्रः रामः लक्ष्मणः च गच्छन्ति । तं मार्गमेव पश्यन्*
*दशरथः तिष्ठति । पृष्ठतः श्लोकः श्रूयते ।)*

श्लोकः - *विश्वामित्रो ययावग्रे ततो रामो महायशाः ।*
*काकपक्षधरो धन्वी तं च सौमित्रिरन्वगात् ॥*

*(पटाक्षेपः)*

# कथाकुतूहली कृष्णः

**पात्राणि -**

कृष्णः

यशोदा

नन्दगोपः

*(नन्दगोपस्य गृहम् । कृष्णः प्रविशति ।)*

कृष्णः - *(मातरम् अन्विष्यन्)* अम्ब... अम्ब... ! कुत्र अस्ति ?

यशोदा - *(प्रविश्य)* किं कृष्ण.. ? अत्रैव अस्मि ।

कृष्णः - *(धावित्वा अङ्कम् आरोहति ।)* अम्ब.. अम्ब.. ! भवती समीपे नास्ति चेत् मह्यं किमपि न रोचते । भवती अत्रैव तिष्ठतु ।

यशोदा - तथैव भवतु । भवान् समीपे नास्ति चेत् मह्यमपि किमपि न रोचते कृष्ण !

कृष्णः - अम्ब.. ! सर्वे वदन्ति यत् भवती बहुकथाः जानाति इति । सत्यं वा अम्ब ?

यशोदा - आं.. जानामि । परं किं तेन ?

कृष्णः - तर्हि मामपि कथां वदतु । अहं कथां श्रोतुं बहु इच्छामि ।

यशोदा - वदामि कदाचित् ।

कृष्णः - इदानीमेव कथां कथयतु अम्ब ! अहं श्रोतुम् इच्छामि ।

यशोदा - वत्स.. ! इदानीं मम समयः नास्ति । बहूनि कार्याणि सन्ति । भवान् गच्छतु.. । मित्रैः सह क्रीडतु ।

*(नन्दगोपः प्रविशति ।)*

कृष्णः - न हि अम्ब.. ! अहम् इदानीमेव कथां श्रोतुम् इच्छामि ।

यशोदा - इदानीम् अहं कामपि कथां न स्मरामि । गच्छतु.., तातं वदतु.. । सः कथां वदति ।

नन्दः - *(दूरतः)* वत्स, कृष्ण, अत्र आगच्छतु । अम्बां मा पीडयतु ।

यशोदा - वत्स, गच्छतु । सः उत्तमाः कथाः जानाति ।

नन्दः - आं वत्स.. ! अत्र आगच्छतु.., अहं कथां वदामि ।

कृष्णः - अहं नागच्छामि । भवान् गोचारणं जानाति । कथाः न जानाति । अम्बा तु उत्तमाः कथाः जानाति । अम्ब.. अम्ब.. ! भवती एव कथां वदतु । भवती मधुरा.. भवत्याः वचनानि अपि मधुराणि । भवत्याः कथा अपि मधुरा, सुमधुरा ।

नन्दः - यशोदे.. ! कृष्णः भवत्याः मुखादेव कथां श्रोतुम् इच्छति । कामपि कथां वदतु ।

यशोदा - हूँ.. भवतु.. । अहमेव वदामि । आगच्छतु कृष्ण ! अत्र उपविशतु । सावधानं श्रोतव्यम् ।

*(कृष्णः पार्श्वे उपविशति ।)*

कृष्णः - अस्तु अम्ब, सम्यक् शृणोमि, वदतु ।

यशोदा - परन्तु कृष्ण.. ! भवान् अतीव चेष्टालुः । गृहं गृहं गत्वा नवनीतं चोरयति । यमुनानदीं गत्वा तत्र जलक्रीडां करोति । एतेषु दिनेषु असत्यमपि वदति इति अन्ये वदन्ति । सत्यं वा... ?

कृष्णः - नास्ति अम्ब ! अहं किमपि अकार्यं न करोमि । कदापि असत्यं न वदामि । अम्ब, कथां वदतु..।

यशोदा - वदामि, उत्तमां कथां वदामि । परन्तु यदि भवान् पुनः अकार्यं करिष्यति तर्हि कदापि कथां न कथयिष्यामि ।

कृष्णः - तथैव अस्तु अम्ब !

यशोदा - सम्यक् उपविशतु । श्रद्धया श्रोतव्यम् । मध्ये विघ्नः न करणीयः ।

कृष्णः - अस्तु अम्ब... ! भवती यथा वदति तथैव करोमि । कथां वदतु ।

यशोदा - वदामि.. । *(स्वगतम्)* कां कथां वदामि ?

कृष्णः - अम्ब.. वदतु अम्ब !

यशोदा - तदेव चिन्तयन्ती अस्मि भोः । भवतु, रामायणकथां वदामि वा ?

कृष्णः - अस्तु अम्ब, वदतु ।

यशोदा - वदामि, प्रतिवाक्यम् अन्ते भवता 'हूँ, हूँ' इति वक्तव्यम् । तेन भवान् जागरितः एव अस्ति वा, निद्रां कृतवान् वा इति अहं ज्ञातुं शक्नोमि ।

कृष्णः - तथैव भवतु, आरम्भं करोतु ।

यशोदा - पुरातनकाले अयोध्या नाम नगरम् आसीत् ।

कृष्णः - हूँ... ।

यशोदा - तत्र 'रामः' इति कश्चन आसीत्..।

कृष्णः - हुँ.. परम् अम्ब, कः सः रामः? एकः तु रामः अत्रैव अस्ति, मम अग्रजः बलरामः ।

यशोदा - एषः न भोः । सः अन्यः रामः । सः दशरथस्य पुत्रः । अयोध्यायाः राजकुमारः । लक्ष्मणस्य अग्रजः । *(साक्षेपम्)* भवान् मध्ये वदति.. अहं कथां न कथयामि ।

कृष्णः - नास्ति अम्ब... । पुनः मध्ये न वदामि, वदतु ।

यशोदा - शृणोतु.. । तस्य पत्न्याः नाम सीता ।

कृष्णः - हुँ... ।

यशोदा - सीता परमपतिव्रता, अतीव सुन्दरी च ।

कृष्णः - किं राधायाः अपेक्षया अपि सुन्दरी..?

यशोदा - *(मुखे अङ्गुलिं निधाय)* तदहं न जानामि । भवान् पुनः मध्ये वदति.. !

कृष्णः - न..., न वदामि । वदतु अम्ब !

यशोदा - रामः पितृवाक्यपरिपालनार्थं सीतया सह अरण्यं गतवान् । लक्ष्मणः अपि तेन सह गतवान् ।

कृष्णः - हुँ... ।

यशोदा - अरण्ये 'पञ्चवटी' इत्यत्र कुटीरं कृत्वा तत्र वासं कृतवन्तः ते सर्वे ।

कृष्णः - हुँ... अग्रे..

यशोदा - कदाचित् मारीचः सुवर्णमृगः भूत्वा तत्र आगतवान् ।

कृष्णः - हुँ... ।

यशोदा - सीता 'तं मृगम् आनयतु' इति रामं प्रार्थितवती ।

कृष्णः - हुँ... ।

यशोदा - सुवर्णमृगम् आनेतुं रामः दूरं गतवान् आसीत् । तदा राक्षसराजः लङ्काधिपतिः रावणः संन्यासिवेषं धृत्वा कुटीरम् आगतवान् ।

कृष्णः - हुँ..

यशोदा - लक्ष्मणः अपि तत्र न आसीत्.. ।

कृष्णः - सः कुत्र गतवान् आसीत्..?

यशोदा - रामस्य साहाय्यार्थं सीता एव तं प्रेषितवती आसीत् ।

कृष्णः - हुँ.. ।

यशोदा - कुटीरे सीता एकाकिनी आसीत् । तदा तत्र आगत्य रावणः तां नीतवान् एव ।

कृष्णः - *(निमीलितनेत्रः सन् रामावतारं स्मरन् उच्चैः)* लक्ष्मण.. ! लक्ष्मण.. ! धनुः, धनुः, मम धनुः आनयतु.... । दुष्टं रावणं मारयामि ।

यशोदा - *(ससम्भ्रमम्)* वत्स, कृष्ण... ! किं वदति ? कुत्र रामः, कुत्र सीता.. कुत्र रावणः ? एषा केवलं कथा भोः... !

कृष्णः - *(सम्भ्रान्तः सन्)* कथा वा.. ? अहं रामः, अहं कृष्णः ।

यशोदा - वत्स, भवान् मम पुत्रः कृष्णः । नन्दगोपालः ।

कृष्णः - आम् अम्ब.. ! अहं भवत्याः पुत्रः गोपालः, गोपालनन्दनः.. ! अम्ब... ! श्रान्तः अस्मि, निद्रां करामि ।

यशोदा - अस्तु वत्स..., करोतु.. ।

*(शाययति )*

*पृष्ठतः श्लोकः श्रूयते -*

*रामो नाम बभूव हुं तदबला सीतेति हुं तौ पितु-*
*र्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः ।*
*कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरितां*
*सौमित्रे क्व धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः ।।*

*(पटाक्षेपः)*

# चारुचेष्टितम्

**पात्राणि -**

वृन्दा

नन्दा

नीला

यशोदा

कृष्णः

## – प्रथमं दृश्यम् –

*(नन्दगोकुलस्य कश्चन मार्गः । एकस्मात् भागात् नन्दा प्रविशति ।*
*अन्यस्मात् वृन्दा प्रविशति ।)*

वृन्दा - अयि नन्दे ! कुत्र गच्छति ?

नन्दा - अरे, वृन्दा वा ? अहं यशोदायाः गृहं गच्छामि । भवती ...?

वृन्दा - अहमपि तत्रैव प्रस्थिता । भवतु, कः विशेषः यशोदायाः गृहे... ?

नन्दा - तत्र कोऽपि विशेषः नास्ति । विशेषः मम गृहे अस्ति ।

वृन्दा - कः विशेषः ... ? भवतीं द्रष्टुं कोऽपि वरः आगच्छति किम् ?

नन्दा - वरोऽपि नागच्छति, वराहोऽपि नागच्छति ।

वृन्दा - तर्हि किम् ?

नन्दा - यशोदायाः प्रियपुत्रः अस्ति किल...

वृन्दा कः सः, कृष्णः वा ?

नन्दा - आम् । सः एव, अद्यापि मम गृहम् आगतवान् आसीत् ।

वृन्दा - *(आश्चर्येण)* किम्, कृष्णः अद्य भवत्याः गृहम् आगतवान् आसीत् वा ?

नन्दा - सत्यं भोः, अद्यापि आगतवान् आसीत् सः चोरः ।

वृन्दा - किं कृतवान् सः ...?

नन्दा - अहो, तस्य अविनयः वर्णयितुमेव अशक्यः ।

वृन्दा - तथा किं कृतवान्.... ?

नन्दा - अद्य मम अम्बा दधिमथनं कृत्वा नवनीतं निष्पाद्य तत् शिक्यायां स्थापितवती आसीत् ।

वृन्दा - अनन्तरम्... ।

वृन्दा - तत् ज्ञात्वा आगतं किल कृष्णस्य वानरसैन्यम्...!

वृन्दा - आगतेन सैन्येन किं कृतम् ?

नन्दा - किञ्चिदपि अविहाय सर्वं नवनीतं समापितम् ।

वृन्दा - हू... । भवती किं कुर्वती आसीत् तदा ?

नन्दा - तदानीमेव गृहकार्याणि समाप्य उपविष्टा आसम् । किञ्चित् निद्रा आगता इव आसीत् ।

वृन्दा - हू...। अनन्तरम्...!

नन्दा - तदा अकस्मात् 'डब्' इति शब्दं श्रुत्वा नेत्रे उद्घाटितवती । पश्यामि, पुरतः पतितम् अस्ति नवनीतपात्रम् । पार्श्वे स्थित्वा हसति अयं नवनीतचोरः !

वृन्दा - ततः किं कृतवती भवती..?

नन्दा - 'चोरः ग्रहीतव्यः' इति बहुकालतः इच्छा आसीत् । 'सः चोरः अद्य लब्धः' इति तं गृहीतवती एव । *(सगर्वम्)* रज्ज्वा तस्य बन्धनं कृत्वा आगता अस्मि ।

वृन्दा - किं सत्यम्..., भवत्याः गृहे सः बद्धः वा ?

नन्दा - आम्, कथमपि पलायितुं यथा न शक्यते तथा बन्धनं कृतवती अस्मि ।

वृन्दा - नन्दे .., भवती असत्यं वदति ।

नन्दा - कथम्..?

वृन्दा - इदमिदानीम् अहं कृष्णं मम गृहे बद्धवती अस्मि ।

नन्दा - *(साश्चर्यम्)* सत्यम्...?

वृन्दा - हू... । तस्य कारणतः अद्य मम गृहे क्षीरमेव नास्ति ।

नन्दा - तत् कथम् ?

वृन्दा - अद्य प्रातः चोरः इव गोष्ठं प्रविष्टः सः सर्वान् अपि वत्सान् रज्जुविहीनान् कृत्वा क्षीरं पायितवान् । दोहनार्थं यदा गच्छामि, धेनवः पादेन मां प्रहरन्ति !

नन्दा - ततः किं कृतं भवत्या..?

वृन्दा - गोष्ठस्य द्वारे चोरः इव स्थितः कृष्णः तदा एव मया दृष्टः । कथम् अहं त्यजानि तम् ... ! गृहीत्वा रज्ज्वा तं गोष्ठे एव बद्ध्वा आगता अस्मि । इदानीं सः धेनुभिः सह बद्धः अस्ति । तदेव यशोदां निवेदयामि इति आगता अस्मि ।

नन्दा - अहो, विश्वसितुमेव न शक्यं खलु एतत्... !

नीला - *(प्रविश्य)* हे सखि नन्दे..., अयि वृन्दे...! कथं द्वे अपि अत्र... ?

नन्दा - यशोदायाः गृहं प्रति गन्तव्यम् इति ।

नीला - *(साश्चर्यम्)* किं यशोदायाः गृहं प्रति... ? अहमपि तत्रैव गच्छामि ।

वृन्दा - किं भवत्या अपि कृष्णः स्वगृहे बद्धः .... ?

नीला - आम्..., अतः एव खलु गच्छामि ।

नन्दा - हू... । भवत्योः भ्रान्तिः स्यात् । कृष्णः मम गृहे बद्धः अस्ति ।

वृन्दा - न हि, न हि । भवत्योः भ्रान्तिः । सः मम गृहे बद्धः अस्ति ।

नीला - भ्रान्तिः भवत्योः । पश्यतु, इदमिदानीं बन्धनं कृत्वा आगता अहम्... ।

नन्दा - भवतु । तद्विषये किमर्थं वृथा विवादः ? सर्वाः अपि वयं यशोदायाः गृहं गत्वा तां निवेदयामः । सा यदा आगच्छति तदा ज्ञायते कृष्णः कुत्र अस्ति इति ।

वृन्दा, नीला - भवतु, तथैव कुर्मः । गच्छामः ।

*(सर्वाः गच्छन्ति)*

## - द्वितीयं दृश्यम् -

*(नन्दगोपस्य गृहम् । यशोदा दधिमथनमग्ना अस्ति । नन्दा, वृन्दा, नीला च प्रविशन्ति ।)*

नन्दा - यशोदे..., अयि यशोदे... !

यशोदा - ओ नन्दे, आगच्छतु । *(दृष्ट्वा)* अहो वृन्दा आगता अस्ति । नीला अपि आगता अस्ति । आगच्छन्तु, सर्वाः आगच्छन्तु । अद्य कः विशेषः, सर्वाः अपि भवत्यः मिलित्वा आगताः सन्ति ?

वृन्दा - यशोदे.., भवत्याः प्रियपुत्रस्य चेष्टितं वर्णयितुम् आगताः वयम् ।

यशोदा - ओ, कृष्णस्य चेष्टितं वा.. ? तदीयानि नानाविधानि दिव्यचेष्टितानि दृष्ट्वा अहं विस्मिता अस्मि भोः !

नीला - दिव्यचेष्टितानि न भोः, चोरचेष्टितानि निवेदयितुम् आगताः वयम् ।

नन्दा - *(साश्चर्यम्)* चोरचेष्टितानि.. ! किं कृतवान् मम पुत्रः तादृशं कार्यम् ?

नन्दा - अद्य मम गृहे यावत् नवनीतं निष्पादितम् आसीत् तत्सर्वमपि लुण्ठाकेन भवत्याः पुत्रेण लुण्ठितम् !

यशोदा - एवं वा ?

वृन्दा - मम गृहे गोष्ठे स्थिताः सर्वेऽपि वत्साः रज्जुविहीनाः कृताः तेन दुष्टेन । अतः एकापि धेनुः क्षीरमेव न ददाति अद्य ।

यशोदा - सत्यं वा ?

नीला - मम गृहे अद्य निष्पादितं दधि तेन निश्शेषं समापितम् ।

यशोदा - हू... ! *(साश्चर्यम्)* किं वदन्ति भवत्यः.., मम पुत्रः अत्रैव अस्ति खलु । कुत्रापि न गतवान् एव सः ।

नन्दा - अत्र कथं भवति सः..., स तु मया गृहे बद्धः अस्ति ।

वृन्दा - मया सः गोष्ठे एव बद्धः अस्ति ।

नीला - सः मम गृहे बद्धः अस्ति ।

यशोदा - किमिदं भोः, एकैका अपि कृष्णः मम गृहे बद्धः अस्ति इति वदति.. परं कृष्णः अत्रैव अस्ति ।

सर्वाः - भवती अत्रैव तिष्ठतु । वयं गृहं गत्वा कृष्णम् अत्रैव आनयामः ।

यशोदा - रात्रौ सुप्तः कृष्णः इतोऽपि न उत्थितवान् एव । कथं तम् आनयन्ति भवत्यः ? अहं तम् अत्रैव आह्वयामि किम् ?

नन्दा - आह्वयतु, आह्वयतु । मम गृहे बद्धः सः अत्र कथं वा आगच्छति.. ?

यशोदा - *(उच्चैः)* कृष्ण...! कृष्ण...! आगच्छतु अत्र ।

कृष्णः - *(जृम्भमाणः प्रविशति ।)* अम्ब... किमर्थम् आहूतवती ? किमर्थं मम निद्राभङ्गं कृतवती ?

नन्दा - *(साश्चर्यम्)* किमिदं चित्रम्...!

वृन्दा - अहह विचित्रम्... !

नीला - अहो अद्भुतम्...!

यशोदा - ज्ञातं खलु, मम पुत्रः अत्रैव अस्ति इति ।

सर्वाः - *(कृष्णं परितः नृत्यन्ति ।)*

*को जानीते को जानीते परमपुरुष तव महिमानम् ।*
*कथय मुरारे कथय मुरारे जगदोद्धारक तव लीलाम् ।।*

*(पटाक्षेपः)*